N.A.

Shiva mahapuran: Vidveswar samhitayam with tika

शिव महापुराण: विद्येश्वर संहितायां टीका सहित

Sanskrit

Paper - Printed

1806 Sakabda (134 years old)

33 Folio

14.7" X 8.4"

Complete

श्रीगणेशायनमः ॥ ॥ विद्येश्वरंशिवमनंतगुणावतारंयंनिर्गुणंश्रुतिविदःकथयंतिनित्यं ॥ तंलिंगरूपमपिभक्तसुखार्थमात्तश्रीमद्भवादिविविधाकृतिमानतोस्मि ॥ १ ॥ जिज्ञासवःपरंतत्वंब्रह्मणाबोधिताःसुराः ॥ साध्यसाधनमुक्तंचप्रथमेतन्निरूप्यते ॥ १ ॥ तत्रादौ ॥ श्रीभगवान्वेदव्यासःशिवब्रह्मतत्वप्राप्त्युपायभूतविद्यायुक्तांविद्येश्वरसंहितांप्रणेतुकामोमंगलमाचरति ॥ आद्यंतेति ॥ आदौसृष्ट्यारंभेऽतेसृष्ट्यंतेचमंगलंसर्वप्राणिकल्याणकरत्वान्मंगलरूपमित्यर्थः ॥ अनेनवैषम्यनैर्घृण्ययोर्निरासःसूचितः ॥ ननुप्राणिकल्याणमन्यस्मादपिसंभवेदतआह ॥ अजातेति ॥ नजातःसमानभावोऽन्यसादृश्यंयस्यतंभक्तजनकल्याणकरणविषयेसर्वेभ्योऽधिकमित्यर्थः ॥ कुतइतिचेत्तत्राह ॥ आद्यंतेति ॥ आद्यंतयोरपिविश्वंकारणात्मनास्थितंयस्मिंस्तं ॥ तदपिकुतइत्यतआह ॥ अजरेति ॥ जरामरणरहितमित्यर्थः ॥ अतएवात्मदेवंआत्मनैवदीव्यतीतितं स्वप्रकाशमित्यर्थः ॥ पंचाननंपंचमुखं ॥ प्रवलेति ॥ प्रवलानिपंचमहापातकानितदपनोदस्वभावं ॥ अथवाप्रवलायेभक्तानांमुक्तेःप्रतिवंधकाःपंचशब्दादयोविषयास्तत्परिहरणशीलंसृष्ट्यादयःपंचवक्ष्यंतेतेषांविशेषेणप्रेरणशीलमितिवाअतएवशंकरंभक्तकल्याणकरमंविकेशमुमापतिंमनसिसंभावयेध्यायामि ॥ १ ॥ एवंमंगलंविधायकथांप्रस्तौति ॥ धर्मक्षेत्रइति ॥ धर्मप्रधानत्वाद्धर्मप्रदत्वाद्वाधर्मक्षयात्त्रायतइतिवाधर्मक्षेत्रंतस्मिन्नित्यर्थः ॥ अतएवमहाक्षेत्रे ॥ गंगाकालिंदिसंगमेगंगायमुनयोःसंगमोयत्रतस्मिन् ॥ गंगाकालिंदीतिसमाहारद्वंद्वःविशिष्टलिंगोनदीदेशोग्रामाइतिनियमस्वीकारेतुङ्यापोरितिऱ्हस्वः ॥ ब्रह्मेति ॥ ब्रह्मलोकस्यप्रापकेमार्गेद्वारभूतइत्यर्थः ॥ २ ॥ मुनयःशौनकादयःसंशितात्मानःसम्यक्संपादितव्रतविषयकप्रयत्नाअतःसत्यमेवव्रतंतत्पराःसत्यव्रतईश्वरस्तत्पराइतिवा ॥ ३ ॥ तत्रप्रयागे ॥ ४ ॥ चक्रुरिति ॥ मुनयइतिसंवध्यते ॥ ततोमुनयोयदब्रुवंस्तदाह ॥ वेदांतेति ॥ वेदांतानामुपनिषदांसारंमुख्यंसर्वस्वंब्रह्मतत्वस्वरूपंयस्मिंस्तदित्यर्थः ॥ ५ ॥ ६ ॥ अस्मिन्श्वेतवराहाख्येपट्कुलीयानांत्रिवेण्याःपट्सुकूलेषुभवानांऱ्हस्वत्वमार्पं॥ ७॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथविद्येश्वरसंहिताप्रारभ्यते ॥ ओंनमःशिवाय ॥ आद्यंतमंगलमजातसमानभावमाद्यंतविश्वमजरामरमात्मदेवम् ॥ पंचाननंप्रबलपंचविनोदशीलंसंभावयेमनसिशंकरमंबिकेशम् ॥ १ ॥ धर्मक्षेत्रेमहाक्षेत्रेगंगाकालिंदिसंगमे ॥ प्रयागेपरमेपुण्येब्रह्मलोकस्यवर्त्मनि ॥ २ ॥ मुनयःसंशितात्मानःसत्यव्रतपरायणाः ॥ महौजसोमहाभागामहासत्रंवितेनिरे ॥ ३ ॥ तत्रसत्रंसमाकर्ण्यव्यासशिष्योमहामुनिः ॥ आजगाममुनीन्द्रष्टुंसूतःपौराणिकोत्तमः ॥ ४ ॥ तंदृष्ट्वासूतमायांतंपूजांचक्रुर्यथाविधि ॥ वेदांतसारसर्वस्वंपुराणंश्रावयाशुनः ॥ ५ ॥ सूतउवाच ॥ शृण्वंतुऋषयःसर्वेपुराणंवेदसारजम् ॥ पुराकालेनमहताकल्पेऽतीतेपुनःपुनः ॥ ६ ॥ अस्मिन्नुपस्थितेकल्पेप्रवृत्तेसृष्टिकर्मणि ॥ मुनीनांषट्कुलीयानांब्रुवतामितरेतरम् ॥ ७ ॥ ॥ ॥

इदमितिं ॥ इदंपरंसर्वातीतंब्रह्मतत्वमिदंनेतिविवादइत्यर्थः ॥ ८ ॥ ९ ॥मुनयोजिज्ञासितंपृच्छंतिस्म॥कइति ॥ सर्वंतत्वेभ्यःप्रकृतिसंभवेभ्योमहदादिभ्यः ॥ यतइति ॥ यस्मात्सकाशाद्वाचोबोधयितुंमनसासहप्रवृत्ताअपिनिवर्ततेअसमर्थाभवंतिअवाङ्मनसगोचरत्वंयस्येतियावत् ॥ १० ॥ इदंजगत् ॥ भूतेंद्रियैरिति ॥ भूतानिआकाशादीनि ॥ इंद्रियाणिश्रोत्रादीनिवागादीनिचतैःसहेत्यर्थः ॥ ११ ॥ १२ ॥ तस्यजगदीश्वरस्य ॥ १३ ॥ साभक्तिर्येनहेतुनालभ्यतेतमाह ॥ प्रसादादिति ॥ नन्वनयोरितरेतराश्रयत्वान्मुक्तिसाधनत्वाभावप्रसंगइत्यतआह ॥यथेति ॥ एवंचलोकप्रमाणसिद्धस्येतरेतराश्रयत्वस्यदूषकतावीजत्वाभावान्नभ

इदंपरमिदंनेतिविवादःसुमहानभूत् ॥ तेऽभिजग्मुर्विधातारंब्रह्माणंप्रष्टुमव्ययम् ॥ ८ ॥ वाग्भिर्विनयगर्भाभिःसर्वे प्रांजलयोऽब्रुवन् ॥ त्वंहिसर्वजगद्धातासर्वकारणकारणम् ॥ ९ ॥ कःपुमान्सर्वतत्वेभ्यःपुराणःपरतःपरः ॥ ॥ ब्रह्मोवाच ॥ यतोवाचोनिवर्ततेअप्राप्यमनसासह ॥ १० ॥ यस्मात्सर्वमिदंब्रह्मविष्णुरुद्रेंद्रपूर्वकम् ॥ सहभूतेंद्रियैःसर्वैःप्रथमंसंप्रसूयते ॥ ११ ॥एषदेवोमहादेवःसर्वज्ञोजगदीश्वरः ॥ अयंतुपरयाभक्त्यादृश्यतेनाऽन्यथाक्वचित्॥ ॥ १२ ॥ रुद्रोहरिर्हरश्चैवतथान्येचसुरेश्वराः ॥ भक्त्यापरमयातस्यनित्यंदर्शनकांक्षिणः ॥ १३ ॥ बहुनात्रकिमुक्तेन शिवेभक्त्याविमुच्यते ॥ प्रसादाद्देवताभक्तिःप्रसादोभक्तिसंभवः ॥ यथेहांकुरतोबीजंबीजतोवायथांकुरः ॥ १४ ॥ तस्मादीशप्रसादार्थंयूयंगत्वाभुवंद्विजाः ॥ दीर्घसत्रंसमाकृध्वंयूयंवर्षसहस्रकम् ॥ १५ ॥ अमुष्यैवाध्वरेशस्यशिवस्यैवप्रसादतः ॥ वेदोक्तविद्यासारंतुज्ञायतेसाध्यसाधनम् ॥ १६ ॥ ॥ मुनयऊचुः॥ अथकिंपरमंसाध्यंकिंवातत्साधनंपरम् ॥ साधकःकीदृशस्तत्रतदिदंब्रूहितत्वतः ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ साध्यंशिवपदप्राप्तिःसाधनंतस्यसेवनम् ॥ साधकस्तत्प्रसादाद्योनित्यादिफलनिस्पृहः ॥ १८ ॥ कर्मकृत्वातुवेदोक्तंतदर्पितमहाफलम् ॥ परमेशपदप्राप्तिःसालोक्यादिक्रमात्ततः ॥ १९ ॥ ॥ ॥ ॥ ॥

कैर्मुक्तिसाधनत्वासंभवइतिभावः ॥ १४ ॥ लोकदृष्ट्येतरेतराश्रयत्वमास्तामीश्वरस्तुदययाकथमप्यार्चितोमृगव्याधादिनेवप्रसीदत्येवेत्यतस्तत्प्रसादनार्थंकथमपियतनीयमितिब्रह्माह ॥ तस्मादिति ॥ भुवमित्यनेनकर्माधिकारोत्रैवलोकइतिसूचितं ॥ यथोक्तंयस्मिन्देशेमृगःकृष्णस्तस्मिन्धर्मान्निबोधतेति ॥ १५ ॥ साध्यसाधनंसाध्यस्यशिवपदप्राप्तिरूपनिःश्रेयसस्यसाधनं ॥ १६ ॥ १७ ॥ तस्यशिवस्य ॥ नित्यादीति ॥ नित्यादीनांनित्यनैमित्तिककाम्यकर्मणांयत्फलंदुरितनिवृत्तिस्वर्गवासादितत्रापिनिस्पृहइत्यर्थः ॥१८॥ वेदोक्तंयागादिकं ॥ तदर्पितेति ॥ तस्मिन्नीश्वरेअर्पितंमहाफलंयस्यतत् ॥ तत्कुरुष्वमदर्पणमितिभगवदुक्तेः ॥ सालोक्यादीति ॥ आदिशब्देनसारूप्यसामीप्यसायुज्यानि ॥ १९ ॥ ॥ ॥ ॥

सर्वेषांभक्तजनानां ॥ तत्साधनंपरमेशपदप्राप्तिफलस्यसाधनं ॥२०॥ कीर्तनंश्रुतस्यदृढीकरणार्थं ॥२१॥ मंतव्यइति ॥ युक्तिभिर्विचारणीयइत्यर्थः॥२२॥
इतिश्रुतिरिति ॥ आत्मावारेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुत्यर्थानुवादोऽयमितिभावः ॥२३॥ ननुश्रुतिवाक्येद्रष्टव्यइतिपूर्वमुक्तम् ततःश्रो
तव्यइत्यादि ॥ कथमत्रतदनुक्त्वापूर्वमेवंश्रोतव्यइत्युक्तमतइत्याह॥अप्रत्यक्षमिति ॥ २४ ॥ श्रवणंश्रवणयोग्यमर्थं ॥ अन्यादिति ॥ श्रवणादन्यत्कीर्तनंभग
वद्गुणानुवर्णनंमननंचसंसाधयेदित्यर्थः ॥ २५ ॥ शिवयोगःशिवविषयनिदिध्यासः ॥ तेनशिवयोगेन॥सालोक्यादीति॥भवेदितिशेषः ॥ श्रुतिवाक्येप्यर्थक्र

तत्तद्भक्त्यनुसारेणसर्वेषांपरमंफलम् ॥ तत्साधनंबहुविधंसाक्षादीशेनबोधितम् ॥ २० ॥ संक्षिप्यतत्रवःसारंसाध
नंप्रब्रवीम्यहम् ॥ श्रोत्रेणश्रवणंतस्यवचसाकीर्तनंतथा ॥ २१ ॥ मनसामननंतस्यमहासाधनमुच्यते ॥ श्रोतव्यः
कीर्तितव्यश्चमंतव्यश्चमहेश्वरः ॥ २२ ॥ इतिश्रुतिःप्रमाणंनःसाधनेनाऽमुनापरम् ॥ साध्यंव्रजतसर्वार्थसाधनैक
परायणाः ॥ २३ ॥ प्रत्यक्षंचक्षुषादृष्ट्वातत्रलोकःप्रवर्तते ॥ अप्रत्यक्षंहिसर्वत्रज्ञात्वाश्रोत्रेणचेष्टते ॥ २४ ॥ तस्मा
च्छ्रवणमेवादौश्रुत्वागुरुमुखाद्बुधः ॥ ततःसंसाधयेदन्यत्कीर्तनंमननंसुधीः ॥२५॥ क्रमान्मननपर्यंतेसाधनेऽस्मिन्सु
साधिते ॥ शिवयोगोभवेत्तेनसालोक्यादिक्रमाच्छनैः ॥ २६ ॥ सर्वांगव्याधयःपश्चात्सर्वानंदश्चलीयते ॥ अभ्या
सात्क्लेशमेतद्वैपश्चादाद्यंतमंगलम् ॥ २७ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांसाध्यसाधनखंडेप्रथमोऽ
ध्यायः ॥ १ ॥ ॥ मुनयऊचुः ॥ मननंकीदृशंब्रह्मन्श्रवणंचापिकीदृशम् ॥ कीर्तनंवाकथंतस्यकीर्तयैतद्यथाय
थं ॥ १ ॥ ब्रह्मोवाच ॥ पूजाजपेशगुणरूपविलासनाम्नांयुक्तिप्रियेणमनसापरिशोधनंयत् ॥ तत्संततंमननमीश्वर
दृष्टिलभ्यंसर्वेषुसाधनवरेष्वपिमुख्यमुख्यम् ॥ २ ॥ ॥ ॥ ॥

मस्यवलवत्वाच्छ्रवणमेवपूर्वंविवक्षितमितिभावः ॥ २६ ॥ सर्वांगेति ॥ पूर्वंसर्वशरीरव्याधयोनश्यंतिपश्चात्सर्वानंदोलीयतेसर्वानंदःपरमात्मनिलीयतइत्यर्थः
॥ रसंह्येवायंलब्ध्वानंदीभवतीतिश्रुतेः ॥ सर्वदुःखक्षयःपश्चात्सर्वानंदश्चलभ्यतइतिपाठांतरं ॥ अभ्यासादिति ॥ अभ्यासंप्राप्यअभ्यासदशायामित्यर्थः॥
एतदुक्तसाधनंक्लेशंकष्टप्रदमित्यर्थः ॥ २७ ॥ इतिश्रीशैवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांसाध्यसाधनखंडेप्रथमोऽध्यायः ॥ १ ॥ ओंनमः
शिवाय ॥ स्वरूपेमननादीनामुक्तेव्यासाययत्पुरा ॥ सनत्कुमारःप्रोवाचतद्द्वितीयेत्रवर्ण्यते ॥ १ ॥ १ ॥ मननस्वरूपमाह ॥ पूजेति ॥ पूजादीनांयुक्तिप्रि
येणानुमानादिविचारयुतेनमनसायत्संततंपरिशोधनंतन्मननमित्यर्थः ॥ ईश्वरदृष्टिलभ्यंईश्वरकृपादृष्टिलभ्यम् ॥ २ ॥ ॥ ॥

कीर्तनस्वरूपमाह ॥ गीतेति ॥ गीतात्मनागानरूपेणश्रुतिपदेनवैदिकशब्देनसामादिनारसवत्प्रेमयुतं ॥ मध्यमिति ॥तादृगर्थविचाराभावादस्यमध्यमत्वं ॥ ३ ॥ श्रवणस्वरूपमाह ॥ येनेति ॥ करणेननिमित्तेन ॥ शब्दपुंजंवाक्यजातंशिवपरंशिवमाहात्म्यस्यप्रतिपादकं ॥ स्त्रीकेलिवदिति ॥ अयंप्रणिधानेलोकप्रसिद्धोदृष्टांतोदर्शितः ॥ नत्वेतत्करणेतात्पर्यं ॥ ४ ॥ उक्तसाधनानांक्रममाह ॥ सत्संगमेनेति ॥ ५ ॥ ६ ॥ ७ ॥ देशिकंगुरुम् ॥ ८ ॥ असौमद्गुरुर्व्यासः॥



गीतात्मनाश्रुतिपदेनचभाषयावाशंभुप्रतापगुणरूपविलासनाम्नाम् ॥ वाचास्फुटंतुरसवत्स्तवनंयदस्यतत्कीर्तनंभवतिसाधनमत्रमध्यम् ॥ ३ ॥ येनापिकेनकरणेनचशब्दपुंजंयत्रक्वचिच्छिवपरंश्रवणेंद्रियेण ॥ स्त्रीकेलिवद्दृढतरंप्रणिधीयतेयत्तद्वैबुधाःश्रवणमत्रजगत्प्रसिद्धम् ॥ ४ ॥ सत्संगमेनभवतिश्रवणंपुरस्तात्संकीर्तनंपशुपतेरथतद्दृढंस्यात् ॥ सर्वोत्तमंभवतितन्मननंतदंतेसर्वंहिसंभवतिशंकरदृष्टिपाते ॥५॥ सूतउवाच ॥ अस्मिन्साधनमाहात्म्येपुरावृत्तंमुनीश्वराः ॥ युष्मदर्थंप्रवक्ष्यामिशृणुध्वमवधानतः ॥ ६ ॥ पुराममगुरुर्व्यासःपराशरमुनेःसुतः ॥ तपश्चचारसंभ्रांतःसरस्वत्यास्तटेशुभे ॥ ७ ॥ गच्छन्यदृच्छयातत्रविमानेनार्करोचिषा ॥ सनत्कुमारोभगवान्ददर्शममदेशिकम् ॥ ८ ॥ ध्यानारूढःप्रबुद्धोसौददर्शतमजात्मजम् ॥ प्रणिपत्याहसंभ्रांतःपरंकौतूहलंमुनिः ॥ ९ ॥ दत्वार्घ्यमस्मैप्रददौदेवयोग्यंचविष्टरम् ॥ प्रसन्नःप्राहतंप्रह्वंप्रभुर्गंभीरयागिरा ॥ १० ॥ सनत्कुमारउवाच ॥ सत्यंवस्तुमुनेदध्याःसाक्षात्करणगोचरः ॥ सशिवोथासहायोत्रतपश्चरसिकिंकृते ॥११॥ एवमुक्तःकुमारेणप्रोवाचस्वाशयंमुनिः ॥ धर्मार्थकाममोक्षाश्चवेदमार्गेकृतादराः ॥ १२ ॥ बहुधास्थापितालोकेमयात्वत्कृपयातथा ॥ एवंभूतस्यमेप्येवंगुरुभूतस्यसर्वतः ॥ १३ ॥ मुक्तिसाधनकंज्ञानंनोदेतिपरमाद्भुतम् ॥ तपश्चरामिमुक्त्यर्थंनजानेतत्रकारणम् ॥ १४ ॥ इत्थंकुमारोभगवान्व्यासेनमुनिनार्थितः ॥ समर्थःप्राहविप्रेंद्रानिश्चयंमुक्तिकारणं ॥१५॥ श्रवणंकीर्तनंशंभोर्मननंचमहत्तरम् ॥ त्रयंसाधनमुक्तंचविद्यतेवेदसंमतम् ॥ १६ ॥ ॥ ॥ ॥ ॥

अजात्मजंब्रह्मपुत्रंसनत्कुमारम् ॥ ९ ॥ विष्टरमासनं ॥ प्रभुःसनत्कुमारः ॥ १० ॥ सत्यंवस्तुशिवतत्त्वरूपं ॥ दध्याःध्यायेः॥यतःसशिवोध्यातःसाक्षात्करणगोचरःप्रत्यक्षयोग्योभवेदित्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ तत्रमुक्तौ ॥ १४ ॥ १५ ॥ १६ ॥ ॥ ॥ ॥

श्रवणादिभ्योऽन्यस्मिन्साधनेसंभ्रमोयस्यसः ॥१७॥१८॥१९॥२०॥ विधिनंदनःसनत्कुमारः ॥ २१ ॥ २२ ॥ २३ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहिताटीकायांद्वितीयोध्यायः ॥२॥ ओंनमःशिवाय ॥ श्रवणादावशक्तानांलिंगमूर्त्यर्चनंशुभं ॥ साधनंपरमंयत्ततृतीयेस्मिन्निरूप्यते ॥ १ ॥ १ ॥ २ ॥ ३ ॥

पुराहमथसंभ्रांतोत्वन्यसाधनसंभ्रमः ॥ अचलेमंदरेशैलेतपश्चरणमाचरम् ॥ १७ ॥ शिवाज्ञयाततःप्राप्तोभगवान्नंदिकेश्वरः ॥ समेदयालुर्भगवान्सर्वसाक्षीगणेश्वरः ॥ १८ ॥ उवाचमह्यंसस्नेहंमुक्तिसाधनमुत्तमम् ॥ श्रवणंकीर्तनंशंभोर्मननंवेदसंमतम् ॥ १९ ॥ त्रिकंचसाधनंमुक्तौशिवेनममभाषितम् ॥ श्रवणादित्रिकंब्रह्मन्कुरुष्वेतिमुहुर्मुहुः ॥ २० ॥ एवमुक्त्वाततोव्यासंसानुगोविधिनंदनः ॥ जगामस्वविमानेनपदंपरमशोभनम् ॥ २१ ॥ एवमुक्तंसमासेनपूर्ववृत्तांतमुत्तमं ॥ ऋषयऊचुः ॥ श्रवणादित्रयंसूतमुक्त्युपायस्त्वयेरितः ॥२२॥ श्रवणादित्रिकेऽशक्तःकिंकृत्वामुच्यतेजनः ॥ अयत्नेनैवमुक्तिःस्यात्कर्मणाकेनहेतुना ॥ २३ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांसाध्यसाधनखंडेद्वितीयोध्यायः ॥ २ ॥ ॥ सूतउवाच ॥ श्रवणादित्रिकेऽशक्तोलिंगंबेरंचशांकरम् ॥ संस्थाप्यनित्यमभ्यर्च्यतरेत्संसारसागरम् ॥ १ ॥ अपिद्रव्यंवहेदेवयथाबलमवंचयन् ॥ अर्पयेल्लिंगबेरार्थमर्चयेदपिसंततम् ॥ ॥ २ ॥ मंडपंगोपुरंतीर्थमठंक्षेत्रंतथोत्सवम् ॥ वस्त्रंगंधंचमाल्यंचधूपंदीपंचभक्तितः ॥ ३ ॥ विविधान्नंचनैवेद्यमपूपव्यंजनैर्युतम् ॥ छत्रंध्वजंचव्यजनंचामरंचापिसांगकम् ॥ ४ ॥ राजोपचारवत्सर्वंधारयेल्लिंगबेरयोः ॥ प्रदक्षिणांनमस्कारंयथाशक्तिजपंतथा ॥ ५ ॥ आवाहनादिसर्गांतंनित्यंकुर्यात्सुभक्तितः ॥ इत्थमभ्यर्चयन्देवंलिंगेबेरेचशांकरे ॥ ६ ॥ सिद्धिमेतिशिवप्रीत्याहित्वापिश्रवणादिकम् ॥ लिंगबेरार्चनामात्रान्मुक्ताःपूर्वेमहाजनाः ॥ ७ ॥ मुनयऊचुः ॥ बेरमात्रेतुसर्वत्रपूज्यंतेदेवतागणाः ॥ लिंगेबेरेचसर्वत्रकथंसंपूज्यतेशिवः ॥ ८ ॥ सूतउवाच ॥ अहोमुनीश्वराःपुण्यंप्रश्नमेतन्महाद्भुतम् ॥ अत्रवक्तामहादेवोनान्योऽस्तिपुरुषःक्वचित् ॥ ९ ॥ शिवेनोक्तंप्रवक्ष्यामिक्रमाद्गुरुमुखाच्छ्रुतम् ॥ शिवैकोब्रह्मरूपत्वान्निष्कलःपरिकीर्तितः ॥ १० ॥ रूपित्वात्सकलस्तद्वत्तस्मात्सकलनिष्कलः ॥ निष्कलत्वान्निराकारंलिंगंतस्यसमागतम् ॥ ११ ॥ ॥ ॥ ॥ ॥

॥ ४ ॥ धारयेत्अर्पयेत् ॥ ५ ॥ सर्गांतंविसर्जनांतं ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ निष्कलःनिर्गुणः ॥ १० ॥ सकलःसगुणः ॥ ११ ॥ ॥

॥ १२ ॥ तदन्येषांशिवादन्येषांदेवानां ॥ १३ ॥ तेशिवादन्ये ॥ १४ ॥ तूष्णींकेवलं ॥ १५ ॥ वेदांतसारमुपनिषत्॥प्रणवार्थेओंकारस्यार्थेब्रह्मस्वरूपेण शंकरतत्वस्यैवप्रकाशनादित्यर्थः ॥ १६ ॥ शिवेति ॥ शिवादन्येयेदेवास्तद्वश्यानांतद्भक्तानामित्यर्थः ॥ शिवान्यदेववंशानामितिपाठांतरं ॥ १७ ॥ १८ ॥



सकलत्वात्तथाबेरंसाकारंतस्यसंगतम् ॥ सकलाकलरूपत्वाद्ब्रह्मशब्दाभिधःपरः ॥ १२ ॥ अपिलिंगेचबेरेचनित्यमभ्यर्च्यतेजनैः ॥ अब्रह्मत्वात्तदन्येषांनिष्कलत्वंनहिकचित् ॥१३॥ तस्मात्तेनिष्कलेलिंगेनाराध्यंतेसुरेश्वराः ॥ अब्रह्मत्वाच्चजीवत्वात्तथान्येदेवतागणाः ॥ १४ ॥ तूष्णींसकलमात्रत्वादर्च्यंतेबेरमात्रके॥जीवत्वंशंकरान्येषांब्रह्मत्वंशंकरस्यच ॥ १५ ॥ वेदांतसारसंसिद्धंप्रणवार्थेप्रकाशनात् ॥ एवमेवपुराष्टष्टोमंदरेनंदिकेश्वरः ॥ १६ ॥ सनत्कुमारमुनिनाब्रह्मपुत्रेणधीमता ॥ सनत्कुमारउवाच ॥ शिवान्यदेववश्यानांसर्वेषामपिसर्वतः ॥ १७॥ बेरमात्रंचपूजार्थंश्रुतंदृष्टंचभूरिशः ॥ शिवमात्रस्यपूजायांलिंगंबेरंचदृश्यते ॥ १८ ॥ अतस्तद्ब्रूहिकल्याणतत्त्वंमेसाधुबोधनं ॥ नंदिकेश्वरउवाच ॥ अनुत्तरमिमंप्रश्नंरहस्यंब्रह्मलक्षणम् ॥ १९ ॥ कथयामिशिवेनोक्तंभक्तियुक्तस्यतेऽनघ ॥ शिवस्यब्रह्मरूपत्वान्निष्कलत्वाच्चनिष्कलम् ॥ २० ॥ लिंगंतस्यैवपूजायांसर्ववेदेषुसंमतम् ॥ तस्यैवसकलत्वाच्चतथासकलनिष्कलम् ॥ २१ ॥ सकलंचतथाबेरंपूजायांलोकसंमतम् ॥ शिवान्येषांचजीवत्वात्सकलत्वाच्चसर्वतः ॥ २२ ॥ बेरमात्रंचपूजायांसंमतंवेदनिर्णये ॥ स्वाविर्भावेचदेवानांसकलंरूपमेवहि ॥ २३ ॥ शिवस्यलिंगंबेरंचदर्शनेदृश्यते खलु ॥ सनत्कुमारउवाच ॥ उक्तंत्वयामहाभागलिंगबेरप्रचारणम् ॥ २४॥ शिवस्यचतदन्येषांविभज्यपरमार्थतः॥ तस्मात्तदेवपरमंलिंगबेरादिसंभवम् ॥ २५ ॥ श्रोतुमिच्छामियोगींद्रलिंगाविर्भावलक्षणम् ॥ नंदिकेश्वरउवाच ॥ शृणुवत्सभवत्प्रीत्यावक्ष्यामिपरमार्थतः ॥ २६॥ पुराकल्पेमहाकालेप्रपन्नेलोकविश्रुते ॥ अयुध्यतांमहात्मानौब्रह्मविष्णूपरस्परम् ॥ २७ ॥ तयोर्मानंनिराकर्तुंतन्मध्येपरमेश्वरः ॥ निष्कलस्तंभरूपेणस्वरूपंसमदर्शयत् ॥ २८॥

अनुत्तरंअशक्यवचनोत्तरंब्रह्मलक्षणंब्रह्मस्वरूपविषयं ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ स्वाविर्भावइति ॥ हियतःशिवादन्येषांदेवानांस्वाविर्भावेसाक्षात्कारे सकलमेवरूपंदृश्यतइत्यर्थः ॥ २३ ॥ ननुशिवस्यापितथैवदृश्यतइत्यतआह ॥ दर्शनइति ॥ दर्शनेशैवशास्त्रे॥ प्रचारणमर्चनं ॥ २४ ॥ २५ ॥ लिंगाविर्भावःशिवस्वरूपप्रादुर्भावस्तदेवलक्षणंयस्यतच्छिवतत्वमित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ ॥ ॥ ॥

स्वलिंगचिन्हत्वात्स्वलिंगाकारत्वात् स्तंभतः स्वतेजोमयस्तंभात् ॥ २९ ॥ ३० ॥ ३१ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितांटीकायांसाध्यसाधनखंडेतृती योऽध्यायः ॥ ३ ॥ ओंनमःशिवाय ॥ महत्वस्पर्धयाविष्णुब्रह्माणौकृतविग्रहौ ॥ दृष्ट्वासुरागताःशंभुमेतत्तुर्यैनिरूप्यते ॥ १ ॥ विषधरायनइति ॥ विषधरः शेषःअयनंशयनस्थानंयस्यसःशेषशायीत्यर्थः ॥ यद्वाविषधरंउदकंअयनंयस्यसःनारायणइत्यर्थः ॥ परयाभूत्यालक्ष्म्यादिसंपदा ॥ स्वानुगैःगरुडादिभिः ॥

ततःस्वलिंगचिन्हत्वात्स्तंभतोनिष्कलंशिवः ॥ स्वलिंगंदर्शयामासजगतांहितकाम्यया ॥ २९ ॥ तदाप्रभृतिलो केषुनिष्कलंलिंगमैश्वरम् ॥ सकलंचतथाबेरंशिवस्यैवप्रकल्पितम् ॥ ३० ॥ शिवान्येषांतुदेवानांबेरमात्रंप्रकल्पित म् ॥ तत्तद्बेरंतुदेवानांतत्तद्भोगप्रदंशुभम् ॥ शिवस्यलिंगबेरत्वंभोगमोक्षप्रदंशुभम् ॥ ३१ ॥ इतिश्रीशिवमहापुराणे विद्येश्वरसंहितायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ नंदिकेश्वरउवाच ॥ पुराकदाचिद्योगींद्रविष्णुर्विषधरा यनः ॥ सुष्वापपरयाभूत्यास्वानुगैरपिसंवृतः ॥ १ यदृच्छयागतस्तत्रब्रह्माब्रह्मविदांवरः ॥ अपृच्छत्पुंडरीकाक्षं शयानंसर्वसुंदरम् ॥ २ ॥ कस्त्वंपुरुषवच्छेषेदृष्ट्वामामपिदृप्तवत् ॥ उत्तिष्ठवत्समांपश्यतवनाथमिहागतम् ॥ ३ ॥ आगतंगुरुमाराध्यंदृष्ट्वायोदृप्तवच्चरेत् ॥ द्रोहिणस्तस्यमूढस्यप्रायश्चित्तंविधीयते ॥ ४ ॥ इतिश्रुत्वावचःक्रुद्धोबहिः शांतवदाचरत् ॥ स्वस्तितेस्वागतंवत्सतिष्ठपीठमितोविश ॥ ५ ॥ किमुतेव्यग्रवद्वक्त्रंविभातिविषमेक्षणम् ॥ ब्रह्मो वाच ॥ वत्सविष्णोमहामानमागतंकालवेगतः ॥ ६ ॥ पितामहश्चजगतःपाताचतववत्सक ॥ विष्णुरुवाच ॥ मत्स्थं जगदिदंवत्समनुषेत्वंहिचोरवत् ॥ ७ ॥ मन्नाभिकमलाजातःपुत्रस्त्वंभाषसेवृथा ॥ नंदिकेश्वरउवाच ॥ एवंहिवदतो स्तत्रमुग्धयोरजयोस्तदा ॥ ८ ॥ अहमेववरोनत्वमहंप्रभुरहंप्रभुः ॥ परस्परंहंतुकामौचक्रतुःसमरोद्यमम् ॥ ९ ॥ युयुधातेऽमरौवीरौहंसपक्षींद्रवाहनौ ॥ वैरंच्यावैष्णवाश्चैवमिथोयुयुधिरेतदा ॥ १० ॥ तावद्विमानगतयःसर्वादेवे वजातयः ॥ दिदृक्षवःसमाजग्मुःसमरंतंमहाद्भुतं ॥ ११ ॥ क्षिपंतःपुष्पवर्षाणिपश्यंतःस्वैरमंबरे ॥ सुपर्णवाहनस्त त्रक्रुद्धोवैब्रह्मवक्षसि ॥ १२ ॥

॥ १ ॥ २ ॥ शेषेशयनंकरोषि ॥ ३ ॥ ४ ॥ विशोपविश ॥ ५ ॥ आगतामिति ॥ मांविद्धीतिशेषः ॥ ६ ॥ पाताचेति ॥ अहमितिशेषः ॥ ७ ॥ ८ ॥ ९ ॥ युयुधातेमरौ ॥ अत्रसंधिरार्षः ॥ वैरिंच्याइति ॥ गणाइतिशेषः ॥ एवमग्रेपि ॥ १० ॥ ११ ॥ सुपर्णवाहनःगरुडवाहनोविष्णुः ॥ १२ ॥ ॥

अस्त्रानिति ॥ पुंस्त्वमार्षं ॥ १३ ॥ तयोःविष्णुब्रह्मणोः ॥ १४ ॥ १५ ॥ ब्रह्मणोपरीत्यत्रसंधिरार्षः ॥ १६ ॥ १७ ॥ भयंकरमिति ॥ बभूवेतिशेषः॥ १८॥ ॥ १९ ॥ देवायदूचुस्तदाह ॥ सृष्टिरिति ॥ तस्मैनमोस्त्वितिशेषः ॥ २० ॥ तृणक्षयोपीति ॥ भवेदितिकल्पनमपीतिशेषः ॥ २१ ॥ शिवक्षयंशिवस्था



मुमोचबाणानसहानस्त्रांश्चविविधान्बहून् ॥ मुमोचाऽथविधिःक्रुद्धोविष्णोरुरसिदुःसहान् ॥ १३ ॥ बाणाननलसंकाशानस्त्रांश्चबहुशस्तदा ॥ तदाश्चर्यमितिस्पष्टंतयोःसमरगोचरम् ॥१४॥ समीक्ष्यदैवतगणाःशशंसुर्भृशमाकुलाः ॥ ततोविष्णुःसुसंक्रुद्धःश्वसन्व्यसनकर्शितः ॥१५॥ माहेश्वरास्त्रंमतिमान्संदधेब्रह्मणोपरि ॥ ततोब्रह्माभृशंक्रुद्धःकंपयन्विश्वमेवहि ॥ १६ ॥ अस्त्रंपाशुपतंघोरंसंदधेविष्णुवक्षसि ॥ ततस्तदुत्थितंव्योम्नितपनायुतसन्निभम् ॥ १७॥ सहस्रमुखमत्युग्रंचंडवातभयंकरम् ॥ अस्त्रद्वयमिदंतत्रब्रह्मविष्ण्वोर्भयंकरम् ॥१८॥ इत्थंबभूवसमरंब्रह्मविष्ण्वोः परस्परम् ॥ ततोदेवगणाःसर्वेविषण्णाभृशमाकुलाः ॥ १९ ॥ ऊचुःपरस्परंतातराजक्षोभेयथाद्विजाः ॥ सृष्टिःस्थितिश्चसंहारस्तिरोभावोप्यनुग्रहः ॥ २० ॥ यस्मात्प्रवर्ततेतस्मैब्रह्मणेचत्रिशूलिने ॥ अशक्यमन्यैर्यदनुग्रहंविनातृणक्षयोप्यत्रयदृच्छयाक्वचित् ॥ २१॥ इतिदेवाभयंक्लाविचिन्वंतःशिवक्षयम् ॥ जग्मुःकैलासशिखरंयत्रास्तेचंद्रशेखरः ॥ २२ ॥ दृष्ट्वैवममरास्तुष्टाःपदंतत्पारमेश्वरम् ॥ प्रणेमुःप्रणवाकारंप्रविष्टास्तत्रसद्मनि ॥ २३ ॥ तेपितत्रसभामध्येमंडपेमणिविष्टरे ॥ विराजमानमुमयाददृशुर्देवपुंगवम् ॥ २४ ॥ सव्योत्तरेतरपदंतदर्पितकरांबुजम् ॥ स्वगणैःसर्वतोजुष्टंसर्वलक्षणलक्षितम् ॥ २५ ॥ वीज्यमानंविशेषज्ञैःस्त्रीजनैस्तीव्रभावनैः ॥ शस्यमानंसदावेदैरनुगृह्णंतमीश्वरम् ॥ २६ ॥ दृष्ट्वैवमीशममराःसंतोषसलिलेक्षणाः ॥ दंडवद्दूरतोवत्सनमश्चक्रुर्महागणाः ॥ २७ ॥ तानवेक्ष्यपतिर्देवान्समीपेचाव्हयद्गणैः ॥ अथसंल्हादयन्देवान्देवोदेवशिखामणिः ॥ अवोचदर्थगंभीरंवचनंमधुमंगलम् ॥ २८ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांचतुर्थोध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥

नं ॥ २२ ॥ २३ ॥ २४ ॥ सव्येति ॥ सव्येवामेउत्तरंउपरिवर्तमानंइतरपदंदक्षिणपदंयस्यतं ॥ तदर्पितेति ॥ तस्मैशिवायार्पितंकरांबुजंयस्मिन्कर्मणियथातथा ॥ २५ ॥ तीव्रभावनैःतीव्राशिवविषयकभावनायेषांतैः ॥ शस्यमानंस्तूयमानं ॥ २६ ॥ संतोषसलिलेक्षणाःसंतोषेणसलिलयुक्तानिईक्षणानियेषांते ॥ ॥ २७ ॥ मधुमधुरं ॥ २८ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांसाध्यसाधनखंडेचतुर्थोऽध्यायः ॥ ४ ॥ ॥

ॐनमःशिवाय ॥ प्रादुर्बभूवशंभोःस्वयंदालिंगंतदाचतौ ॥ दृष्ट्वाशांतौचतत्तेजइत्येतत्पंचमेस्थितम् ॥ १ ॥ वत्सकाःभोदेवाः ॥ स्वस्वकर्मणीति ॥ वर्तत इत्यनुषज्यते ॥ १ ॥ भाषितंवोधितं ॥ २ ॥ कुमारहेसनत्कुमारमाध्व्यामधुरयापरिभाषणवाचा ॥ ३ ॥ तत्रैवयुद्धांगणरूपायां ॥ ४ ॥ वाद्यमिति ॥ अवा द्यतेतिशेषः ॥ परेशितुःशिवस्य ॥ ५ ॥ आद्यंतमिति ॥ व्याप्येतिशेषः ॥ पंचमंडलमंडितंपंचोपवेशनस्थानयुतं ॥ ६ ॥ तयोःविष्णुब्रह्मणोः ॥ ७ ॥ निगु

ईश्वरउवाच ॥ वत्सकाःस्वस्तिवःकच्चिद्वर्ततेममशासनात् ॥ जगच्चदेवतावंशःस्वस्वकर्मणिकिंनवा ॥ १ ॥ प्रागेव विदितंयुद्धंब्रह्मविष्ण्वोर्मयासुराः ॥ भवतामभितापेनपौनरुक्तेनभाषितम् ॥ २ ॥ इतिसस्मितयामाध्व्याकुमारप रिभाषया ॥ समतोषयदंवायाःसपतिस्तत्सुरव्रजम् ॥ ३ ॥ अथयुद्धांगणंगंतुंहरिधात्रोरधीश्वरः ॥ आज्ञापयद्गणे शानांशतंतत्रैवसंसदि ॥ ४ ॥ ततोवाद्यंबहुविधंप्रयाणायपरेशितुः ॥ गणेश्वराश्वसंनद्धानानावाहनभूषणाः ॥ ५ ॥ प्रणवाकारमाद्यंतंपंचमंडलमंडितम् ॥ आरुरोहरथंभद्रमंबिकापतिरीश्वरः ॥ ससूनुगणमिंद्राद्याःसर्वेप्यनुययुःसु राः ॥ ६ ॥ चित्रध्वजव्यजनचामरपुष्पवर्षसंगीतनृत्यनिवहैरपिवाद्यवर्गैः ॥ संमानितःपशुपतिःपरयाचदेव्यासा कंतयोःसमरभूमिमगात्ससैन्यः ॥ ७ ॥ समीक्ष्यतुतयोर्युद्धंनिगूढोऽभ्रंशमास्थितः ॥ समाप्तवाद्यनिर्घोषःशांतोरुग णनिःस्वनः ॥ ८ ॥ अथब्रह्माच्युतौवीरौहंतुकामौपरस्परम् ॥ माहेश्वरेणचाऽस्त्रेणतथापाशुपतेनच ॥ ९ ॥ अस्त्र ज्वालैरथोदग्धंब्रह्मविष्ण्वोर्जगत्रयम् ॥ ईशोपितंनिरीक्ष्याथह्यकालप्रलयंभृशम् ॥ १० ॥ महानलस्तंभविभीषणा कृतिर्बभूवतन्मध्यतलेसनिष्कलः ॥ ११ ॥ तेअस्त्रेचापिसज्वालेलोकसंहरणक्षमे ॥ निपेततुःक्षणेनैवह्याविर्भू तेमहानले ॥ १२ ॥ दृष्ट्वातदद्भुतंचित्रमस्त्रशांतिकरंशुभम् ॥ किमेतदद्भुताकारमित्यूचुश्चपरस्परम् ॥ १३ ॥ अतीं द्रियमिदंस्तंभमग्निरूपंकिमुत्थितम् ॥ अस्योर्ध्वमपिचाधश्चआवयोर्लक्ष्यमेवहि ॥ १४ ॥ इतिव्यवस्थितौवीरौमि लितौवीरमानिनौ ॥ तत्परौतत्परीक्षार्थंप्रतस्थातेऽथसत्वरम् ॥ १५ ॥ आवयोर्मिश्रयोस्तत्रकार्यमेकंनसंभवेत् ॥ इत्युक्त्वासूकरतनुर्विष्णुस्तस्यादिमियिवान् ॥ १६ ॥ ॥ ॥ ॥ ॥

ढःगुप्तरूपः ॥ ८ ॥ ९ ॥ १० ॥ तन्मध्यतलेतयोर्विष्णुब्रह्मणोर्मध्यभागे ॥ ११ ॥ तेमाहेश्वरपाशुपते ॥ १२ ॥ तत्तेजः ॥ १३ ॥ स्तंभमित्यत्रपुंस्त्वमा र्षं ॥ लक्ष्यंद्रष्टव्यं ॥ १४ ॥ प्रतस्थातेथं अत्रसंधिरार्षः ॥ १५ ॥ तस्यमहानलस्यआदिंमूलभागंईयिवान्गतवान् ॥ १६ ॥ ॥

तदंतंमहानलोर्ध्वभागं ॥ १७ ॥ १८ ॥ १९ ॥ वह्निति ॥ अनेनस्तंभस्यापरिच्छिन्नत्वंसूचितं ॥ तयोःब्रह्मकेतकयोः ॥ २०॥ परिहासंदर्शयितुंपुष्पस्यच्यवनेहेतु माह ॥ चलितमिति ॥ यतःशिवस्यशिरश्चलितंतस्माच्छिवस्तावनुगृण्हात्वितिच्युतमित्यर्थः ॥ २१ ॥ किंत्वमितिब्रह्मोक्तिः ॥ आदिमस्येत्यादिःकेतकोक्तिः अप्रमेयस्यअपरिच्छेद्यस्य॥ २२॥ संपश्यामीति ॥ स्तंभांतमितिशेषःअस्येत्यादिर्ब्रह्मोक्तिः ॥ २३ ॥ २४ ॥ यद्वाच्यमित्युक्तंतदाह ॥ स्तंभांतइति ॥ ननुमिथ्या

तथाब्रह्माहंसतनुस्तदंतंवीक्षितुंययौ ॥ भित्वापातालनिलयंगत्वादूरतरंहरिः ॥ १७ ॥ नाऽपश्यत्तस्यसंस्थानंस्तंभ स्यानलवर्चसः ॥ श्रांतःससूकरहरिःप्रापपूर्वरणांगणम् ॥ १८ ॥ अथगच्छंस्तुव्योम्नाचविधिस्तातपितातव ॥ दद र्शकेतकीपुष्पंकिंचिद्विच्युतमद्भुतम् ॥ १९ ॥ अतिसौरभ्यसंमानंबहुवर्षच्युतंतथा ॥ अन्वीक्ष्यचतयोःकृत्यंभगवान् परमेश्वरः ॥ २० ॥ परिहासंतुकृतवान्कंपनाच्चलितंशिरः ॥ तस्मात्तावनुगृण्हातुच्युतंकेतकमुत्तमम् ॥ २१ ॥ किं त्वंपतसिपुष्पेशपुष्पराट्केनवाधृतम् ॥ आदिमस्याप्रमेयस्यस्तंभमध्याच्च्युतश्चिरम् ॥ २२ ॥ नसंपश्यामितस्मात्त्वंज ह्याशामंतदर्शने ॥ अस्यांऽतस्यचसेवार्थंहंसमूर्तिरिहागतः ॥ २३ ॥ इतःपरंसखेमेऽद्यत्वयाकर्तव्यमीप्सितम् ॥ म यासहत्वयावाच्यमेतद्विष्णोश्चसन्निधौ ॥ २४ ॥ स्तंभांतोवीक्षितोधात्रातत्रसाक्ष्यहमच्युत ॥ इत्युक्त्वाकेतकं तत्रप्रणनामपुनःपुनः ॥ असत्यमपिशस्तंस्यादापदीत्यनुशासनम् ॥ २५ ॥ समीक्ष्यतत्राऽच्युतमायतश्रमंप्रणष्ट हर्षंतुननर्तहर्षात् ॥ उवाचचैनंपरमार्थमच्युतंषंढात्तवादःसविधिस्ततोऽच्युतम् ॥ २६ ॥ स्तंभाग्रमेतत्समुदीक्षि तंहरेतत्रैवसाक्षीननुकेतकंत्विदम् ॥ ततोऽवदत्तत्रहिकेतकंमृषातथेतितद्धात्वचस्तदंतिके ॥ २७ ॥ हरिश्चत त्सत्यमितीवचिंतयंश्चकारतस्मैविधयेनमःस्वयम् ॥ षोडशैरुपचारैश्चपूजयामासतंविधिम् ॥ २८ ॥ विधिंप्रहर्तुं शठमग्निलिंगतःसईश्वरस्तत्रबभूवसाकृतिः ॥ समुत्थितःस्वामिविलोकनात्पुनःप्रकंपपाणिःपरिगृह्यतत्पदम् ॥ २९ ॥ आद्यंतहीनवपुषित्वयिमोहबुध्याभूयान्विमर्शइहनावतिकामनोत्थः ॥ सत्वंप्रसीदकरुणाकरकश्मलंनौमृष्टंक्षम स्वविहितंभवतैवकेल्या ॥ ३० ॥ ईश्वरउवाच ॥ वत्सप्रसन्नोऽस्मिहरेयतस्त्वमीशत्वमिच्छन्नपिसत्यवाक्यम् ॥ ब्रूया स्ततस्तेभविताजनेषुसाम्यंमयासत्कृतिरप्यलप्सि ॥ ३१ ॥ ॥ ॥

कथंवाच्यमतआह ॥ असत्यमिति ॥ २५ ॥ आयतश्रमंदीर्घश्रमम् ॥ षंढेति ॥ षंढवदात्तोवादोयेनसः ॥ २६ ॥ २७ ॥ २८ ॥ शठंकपटयुक्तम् ॥ अग्निलिं गतःअग्निरूपेण ॥ समुत्थितइति ॥ हरिरितिशेषः ॥ तत्पदंईश्वरचरणम् ॥ परिगृह्याहेतिशेषः ॥ २९ ॥ मृष्टंनष्टं ॥ ३० ॥ अलप्सि लप्स्यतेत्यर्थः ॥ ३१ ॥

पृथगात्मनःपृथङ्मूर्तेःक्षेत्रप्रतिष्ठाक्षेत्रेषुपुण्यदेशेषुप्रतिष्ठा ॥३२॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांसाध्यसाधनखंडेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॐनमःशिवाय ॥ शिवसृष्टोभैरवोयच्चिच्छेदब्रह्मणःशिरः ॥ शिवेनानुगृहीतश्चब्रह्मापष्ठेतदीरितम् ॥ १ ॥ १ ॥ सःभैरवः ॥ २ ॥ जवसा

इतःपरंतेपृथगात्मनश्चक्षेत्रप्रतिष्ठोत्सवपूजनंच ॥ इतिदेवःपुराप्रीतःसत्येनहरयेपरम् ॥ ददौस्वसाम्यमत्यर्थंदेवसं
घेचपश्यति ॥ ३२ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांपंचमोऽध्यायः ॥ ५ ॥ नंदिकेश्वरउवाच ॥ ससर्जो
थमहादेवःपुरुषंकंचिदद्भुतम् ॥ भैरवाख्यंभ्रुवोर्मध्याद्ब्रह्मदर्पजिघांसया ॥ १ ॥ सवैतदातत्रपतिंप्रणम्यशिवमंगणे ॥
किंकार्यंकरवाण्यत्रशीघ्रमाज्ञापयप्रभो ॥ २ ॥ वत्सयोऽयंविधिःसाक्षाज्जगतामाद्यदैवतम् ॥ नूनमर्चयखड्गेनतिग्मे
नजवसापरम् ॥ ३ ॥ सवैगृहीत्वैककरेणकेशंतत्पंचमंदृप्तमसत्यभाषणम् ॥ छित्वाशिरांस्यस्यनिहंतुमुद्यतःप्रकंपय
न्खड्गमतिस्फुटंकरैः ॥ ४ ॥ पितातवोत्सृष्टविभूषणांबरस्त्रगुत्तरीयामलकेशसंहतिः ॥ प्रवातरंभेवलतेवचंचलःपपा
तवैभैरवपादपंकजे ॥ ५ ॥ तावद्विधिंतातदिदृक्षुरच्युतःकृपालुरस्मत्पतिपादपल्लवम् ॥ निषिच्यबाष्पैरवदत्कृतांज
लिर्यथाशिशुःस्वंपितरंकलाक्षरम् ॥ ६ ॥ अच्युतउवाच ॥ त्वयाप्रयत्नेनपुराहिदत्तंयदस्यपंचाननमीशचिन्हम् ॥
तस्मात्क्षमस्वाद्यमनुग्रहार्हंकुरुप्रसादंविधयेह्यमुष्मै ॥ ७ ॥ इत्यर्थितोऽच्युतेनेशस्तुष्टःसुरगणांगणे ॥ निवर्तयामा
सतदाभैरवंब्रह्मदंडतः ॥ ८ ॥ अथाहदेवःकितवंविधिंविगतकंधरम् ॥ ब्रह्मंस्त्वमर्हणाकांक्षीशठमीशत्वमास्थितः ॥
॥ ९ ॥ नातस्तेसत्कृतिर्लोकेभूयात्स्थानोत्सवादिकम् ॥ ब्रह्मोवाच ॥ स्वामिन्प्रसीदाद्यमहाविभूतेमन्येवरंवरदमे
शिरसःप्रमोक्षम् ॥ १० ॥ नमस्तुभ्यंभगवतेबंधवेविश्वयोनये ॥ सहिष्णवेसर्वदोषाणांशंभवेशैलधन्वने ॥ ११ ॥

वेगेन ॥ परंश्रेष्ठं ॥ ३ ॥ ४ ॥ पिताब्रह्मा ॥ प्रवातरंभाप्रकृष्टवातयुताकदली ॥ ५ ॥ दिदृक्षुरिति ॥ रिरक्षुरितिपाठांतरं ॥ अस्मत्पतिःशिवः ॥ कलाक्ष
रमव्यक्तमधुरध्वनियुतवर्णं ॥ ६ ॥ अस्यब्रह्मणः ॥ ७ ॥ ८ ॥ कितवंकपटयुक्तम् ॥ ९ ॥ वरमिति ॥ भवदनुग्रहाच्छिरोमोक्षमपिवरमेवमन्यइत्यर्थः ॥
यस्यानुग्रहमिच्छामितस्यसर्वंहराम्यहमितिभगवदुक्तेरितिभावः ॥ १० ॥ ११ ॥ ॥ ॥ ॥ ॥

अराजेति ॥ नराजभयंयत्रतदित्यर्थः ॥ नशिष्यतिनस्थास्यति ॥ जगत्सर्वंविनंक्ष्यतीतिपाठांतरं ॥ अतएवाहमनुः ॥ अराजकेहिलोकेस्मिन्सर्वतोविद्रुते भयात् ॥ रक्षार्थमस्यसर्वस्यराजानमसृजत्प्रभुरिति ॥ १२ ॥ वैतानिकेषुअग्निहोत्रादिषु ॥ गृह्येषुस्मार्तेषु ॥ १३ ॥ निष्फलइति ॥ परमेष्ठिनोवाएपयज्ञोग्र आसीदितिश्रुतेः ॥ १४ ॥ १५ ॥ तत्पार्श्वात्शिवपार्श्वात् ॥ १६ ॥ केतकःशिवंप्रार्थयत ॥ नमइति ॥ १७ ॥ मिथ्यादोषःमिथ्याभाषणप्रयुक्तदोषः ॥ ॥ १८ ॥ भगवानिति ॥ आहेतिशेषः ॥ १९ ॥ मदीयाःविष्णुप्रभृतयः ॥ वितानव्याजेनमंडपरचनानिमित्तेन ॥ २० ॥ केतकमिति ॥ केतकंविधिमाध

ईश्वरउवाच ॥ अराजभयमेतद्वैजगत्सर्वंनशिष्यति ॥ ततस्त्वंजहिदंडार्हैवहलोकधुरंशिशो ॥ १२ ॥ वरंददामिते तत्रगृहाणदुर्लभंपरम् ॥ वैतानिकेषुगृह्येषुयज्ञेषुचभवान्गुरुः ॥ १३ ॥ निष्फलस्त्वदृतेयज्ञःसांगश्चसहदक्षिणः ॥ अथाहदेवःकितवंकेतकंकूटसाक्षिणम् ॥ १४ ॥ रेरेकेतकदुष्टस्त्वंशठदूरमितोव्रज ॥ ममापिप्रेमतेपुष्पेमाभूत्पूजा स्वितःपरम् ॥ १५ ॥ इत्युक्तेतत्रदेवेनकेतकंदेवजातयः ॥ सर्वानिवारयामासुस्तत्पार्श्वादन्यतस्तदा ॥ १६ ॥ के तकउवाच ॥ नमस्तेनाथमेजन्मनिष्फलंभवदाज्ञया ॥ सफलंक्रियतांतातक्षम्यतांममकिल्बिषम् ॥ १७ ॥ ज्ञाना ज्ञानकृतंपापंनाशयत्येवतेस्मृतिः ॥ तादृशेत्वयिदृष्टेमेमिथ्यादोषःकुतोभवेत् ॥ १८ ॥ तथास्तुतस्तुभगवान्केतके नसभातले ॥ नमेत्वद्धारणंयोग्यंसत्यवागहमीश्वरः ॥ १९ ॥ मदीयास्त्वांधरिष्यंतिजन्मतेसफलंततः ॥ त्वंवैवितान व्याजेनममोपरिभविष्यसि ॥ २० ॥ इत्यनुगृह्यभगवान्केतकंविधिमाधवौ ॥ विरराजसभामध्येसर्वदेवैरभिष्टुतः ॥ २१ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांषष्ठोऽध्यायः ॥ ६ ॥ नंदिकेश्वरउवाच ॥ तत्रांतरेतौचनाथंप्रण म्यविधिमाधवौ ॥ बद्धांजलिपुटौतूष्णींतस्थतुर्दक्षवामगौ ॥ १ ॥ तत्रसंस्थाप्यतौदेवंसकुटुंबंवरासने ॥ पूजयामास तुःपूज्यंपुण्यैःपुरुषवस्तुभिः ॥ २ ॥ ॥ ॥ ॥ ॥

वौचानुगृह्येत्यन्वयः ॥ २१ ॥ इतिश्रीशैवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांसाध्यसाधनखंडेब्रह्मकेतकशापप्रदानादिवर्णनंनामषष्ठोऽध्यायः ॥ ६ ॥ ओंनमःशिवाय ॥ आनर्चतुःशिवंविष्णुब्रह्माणौशंकरस्तयोः॥दिदेशलिंगपूजादिसप्तमेतन्निरूप्यते॥ १ ॥दक्षवामगौदक्षिणभागेवामभागेचक्रमेण स्थितौ ॥ १ ॥ २ ॥ पुरुषवस्तुभिःपुरुषसंभवपदार्थैः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

पौरुषंपुरुषसंकल्पप्रभवंप्राकृतंप्रकृतिसंभवंकिंचिद्दीर्घकालिकंकिंचित्स्वाल्पकालिकं॥ पौरुषप्राकृतवस्तुविवेकदिगत्रैवांतिमाध्यायेप्रदर्शिता ॥ यदूर्जितंचनि त्यंचतद्धिपौरुषमुच्यतइत्यादिभिः ॥ पौरुषवस्तुभिरर्चनेफलातिशयउक्तोऽत्रैवपंचदशे ॥ तदर्वाक्यरिवर्ततेप्राकृतद्रव्यपूजकाः ॥ तदूर्ध्वंहिव्रजंत्येतेपौरुषद्र व्यपूजकाइति ॥ तत्रद्विविधेष्वपिवस्तुपूक्तलक्षणैरेवपूजयामासतुरितिभावः ॥ तान्येववस्तून्याह ॥ हारेति ॥ ३ ॥ ४ ॥ ५ ॥ पतियोग्यैःस्वामिपूजार्हैः ॥ पश्वल भ्यैःजीवानामप्राप्यैः ॥ हेहितध्वजलोकहितायध्वजभूतश्रेष्ठसनत्कुमार ॥ ६ ॥ पारंपर्यचिकीर्षयां पूज्यैरेवंकर्तव्यमितिपरंपरागतक्रमस्यकर्तुमिच्छया ॥

पौरुषंप्राकृतंवस्तुज्ञेयंदीर्घाल्पकालिकम् ॥ हारनूपुरकेयूरकिरीटमणिकुंडलैः ॥ ३ ॥ यज्ञसूत्रोत्तरीयस्त्रक्क्षौममा ल्यांगुलीयकैः ॥ पुष्पतांबूलकर्पूरचंदनागुरुलेपनैः ॥ ४ ॥ धूपदीपसितच्छत्रव्यजनध्वजचामरैः ॥ अन्यैर्दिव्योप हारैश्चवाङ्मनोतीतवैभवैः ॥ ५ ॥ पतियोग्यैःपश्वलभ्यैस्तौसमार्चयतांपतिम् ॥ यद्यच्छ्रेष्ठतमंवस्तुपतियोग्यंहित ध्वज ॥ ६ ॥ तद्वस्त्वखिलमीशोपिपारंपर्यचिकीर्षया ॥ सभ्यानांप्रददौदृष्टःपृथक्तत्रयथाक्रमं ॥ ७ ॥ कोलाहलो महानासीत्तत्रतद्वस्तुगृण्हताम् ॥ तत्रैवब्रह्मविष्णुभ्यांचार्चितःशंकरःपुरा ॥ ८ ॥ प्रसन्नःप्राहतौनम्रौसस्मितंभक्तिव र्धनः ॥ ईश्वरउवाच ॥ तुष्टोऽहमद्यवांवत्सौपूजयाऽस्मिन्महादिने ॥ ९ ॥ दिनमेतत्ततःपुण्यंभविष्यतिमहत्तरम् ॥ शिवरात्रिरितिख्याताततिथिरेषाममप्रिया ॥ १० ॥ एतत्कालेतुयःकुर्यात्पूजांमल्लिंगबेरयोः ॥ कुर्यात्तुजगतःकृत्यंस्थि तिसर्गादिकंपुमान् ॥ ११ ॥ शिवरात्रावहोरात्रंनिराहारोजितेंद्रियः ॥ अर्चयेद्वायथान्यायंयथाबलमवंचकः ॥ १२ ॥ यत्फलंममपूजायांवर्षमेकंनिरंतरम् ॥ तत्फलंलभतेसद्यःशिवरात्रौमदर्चनात् ॥ १३ ॥ मद्धर्मवृद्धिकालोऽयंचंद्रका लइवांबुधेः ॥ प्रतिष्ठाद्युत्सवोयत्रमामकोमंगलायनः ॥ १४ ॥ यत्पुनःस्तंभरूपेणस्वाविरासमहंपुरा ॥ सकालोमार्ग शीर्षेतुस्यादार्द्राऋक्षमर्भकौ ॥ १५ ॥ आर्द्रायांमार्गशीर्षेतुयःपश्येन्मामुमासखम् ॥ मद्बेरमपिवालिंगंसगुहादपिमे प्रियः ॥ १६ ॥ अलंदर्शनमात्रेणफलंतस्मिन्दिनेशुभे ॥ अभ्यर्चनंचेदधिकंफलंवाचामगोचरम् ॥ १७ ॥ रणरं गतलेऽमुष्मिन्यदहंलिंगवर्ष्मणा ॥ जृंभितोलिंगवत्तस्माल्लिंगस्थानमिदंभवेत् ॥ १८ ॥ ॥

सभ्यानांतत्रस्थितानां ॥ ॥ ७ ॥ ८ ॥ तौविष्णुब्रह्माणौ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ मंगलायनःमंगलस्यप्रापकः ॥ स्वाविरासंशोभनतयाप्रादुरभवम् ॥ ॥ १४ ॥ आर्द्राऋक्षमिति ॥ आर्द्रानक्षत्रंरुद्रोदेवतेत्यादिश्रुतेस्तस्यरुद्रदेवताकत्वादितिभावः ॥ १५ ॥ अलंपर्याप्तं ॥ १६ ॥ रणरंगतलेयुद्धभूमौ ॥ १७ ॥ जृंभितःप्रकटीभूतः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

भोगावहंसुखस्यप्रापकं ॥ १९ ॥ २० ॥ ख्यातिमिति ॥ असौयस्ताम्रोअरुणइत्यादिश्रुतिःप्रदीप्ताग्नेररुणवर्णत्वात्तत्सादृश्यंचैतत्ख्यातौबीजमितिभावः ॥ ॥ २१ ॥ २२ ॥ जनावासंजननिवासस्थानंभविष्यतीतिसंबध्यते ॥ २३ ॥ संस्मृतिमात्रेण ॥ ममेतिशेषः ॥ २४ ॥ २५ ॥ अर्चयित्वेति ॥ फलंलभतइ तिशेषः ॥ फलमेवाह ॥ सालोक्यमिति ॥ एषांस्वरूपंवक्ष्यते ॥ २६ ॥ एतेमोक्षाः ॥ क्रियादीनांस्थापनपूजनादीनां ॥ २७ ॥ २८ ॥ उत्थापयदिति ॥

अनाद्यंतमिदंस्तंभमणुमात्रंभविष्यति ॥ दर्शनार्थंहिजगतांपूजनार्थंहिपुत्रकौ ॥ १९ ॥ भोगावहमिदंलिंगंभुक्तिमु क्त्येकसाधनं ॥ दर्शनस्पर्शनध्यानाज्जंतूनांजन्ममोचनं ॥ २० ॥ अनलाचलसंकाशंयदिदंलिंगमुत्थितम् ॥ अरुणा चलमित्येवतदिदंख्यातिमेष्यति ॥ २१ ॥ अत्रतीर्थंचबहुधाभविष्यतिमहत्तरम् ॥ मुक्तिरप्यत्रजंतूनांवासेनमरणे नच ॥ २२ ॥ रथोत्सवादिकल्याणंजनावासंतुसर्वतः ॥ अत्रदत्तंहुतंजप्तंसर्वंकोटिगुणंभवेत् ॥ २३ ॥ मत्क्षेत्रादपिसर्व स्मात्क्षेत्रमेतन्महत्तरम् ॥ अत्रसंस्मृतिमात्रेणमुक्तिर्भवतिदेहिनाम् ॥ २४ ॥ तस्मान्महत्तरमिदंक्षेत्रमत्यंतशोभनं ॥ सर्वकल्याणसंपूर्णंसर्वमुक्तिकरंशुभम् ॥ २५ ॥ अर्चयित्वाऽत्रमामेवलिंगेलिंगिनमीश्वरम् ॥ सालोक्यंचैवसामीप्यं सारूप्यंसार्ष्टिरेवच ॥ २६ ॥ सायुज्यमितिपंचैतेक्रियादीनांफलंमतम् ॥ सर्वेपियूयंसकलंप्राप्स्यथाशुमनोरथम् ॥ ॥ २७ ॥ नंदिकेश्वरउवाच ॥ इत्यनुगृह्यभगवान्विनतौविधिमाधवौ ॥ यत्पूर्वंप्रहतंयुद्धेतयोःसैन्यंपरस्परम् ॥ ॥ २८ ॥ तदुत्थापयदत्यर्थंस्वशक्त्याऽमृतधारया ॥ तयोर्मौढ्यंचवैरंचव्यपनेतुमुवाचतौ ॥ २९ ॥ सकलंनिष्कलं चेतिस्वरूपद्वयमस्तिमे ॥ नान्यस्यकस्यचित्तस्मादन्यःसर्वोप्यनीश्वरः ॥ ३० ॥ पुरस्तात्स्तंभरूपेणपश्चाद्रूपेणचा र्भकौ ॥ ब्रह्मत्वंनिष्कलंप्रोक्तमीशत्वंसकलंतथा ॥ ३१ ॥ द्वयंममैवसंसिद्धंनमदन्यस्यकस्यचित् ॥ तस्मादीशत्वम न्येषांयुवयोरपिनक्वचित् ॥ ३२ ॥ तदज्ञानेनवांवृत्तमीशमानंमहाद्भुतम् ॥ तन्निराकर्तुमत्रैवमुत्थितोऽहंरणक्षितौ ॥ ॥ ३३ ॥ त्यजतंमानमात्मीयंमयीशेकुरुतंमतिम् ॥ मत्प्रसादेनलोकेषुसर्वोप्यर्थःप्रकाशते ॥ ३४ ॥ गुरूक्तिर्व्यंजकं तत्रप्रमाणंवापुनःपुनः ॥ ब्रह्मतत्त्वमिदंगूढंभवत्प्रीत्याभणाम्यहम् ॥ ३५ ॥ ॥ ॥

अडभावआर्षः ॥ तौविधिमाधवौ ॥ २९ ॥ ३० ॥ रूपेणमूर्त्तिरूपेण ॥ प्रोक्तमिति ॥ क्रमेणेतिशेषः ॥ ३१ ॥ ३२ ॥ ईशमानमीश्वरत्वाभिमानः ॥ उत्थितःप्रादुर्भूतः ॥ ३३ ॥ ३४ ॥ गुरूक्तिरिति ॥ गुरूभक्तिरितिपाठांतरं ॥ व्यंजकंप्रकाशकं ॥ तत्रसर्वार्थप्रकाशने ॥ ३५ ॥ ॥

कलाकलंसकलंनिष्कलंच ॥ ३६ ॥ ब्रह्मपदार्थनिर्वक्ति ॥ बृहत्वादिति ॥ सर्वव्यापित्वाज्जगतोवर्धकत्वाच्चेत्यर्थः ॥ एवमात्मपदार्थनिर्वक्ति ॥ समत्वादिति ॥ सर्वदैकरूपत्वादित्यर्थः ॥ समंताद्व्यापकत्वाच्चेतिपाठांतरं ॥ आत्मेति ॥ सततमततिव्याप्नोतीत्यात्मा ॥ अतसातत्यगमने ॥ ३७ ॥ अनुग्रहाद्यमिति ॥ व्युत्क्रमेणेदमुक्तमित्यनुपदंव्यक्तीभविष्यति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ प्रतिष्ठितंस्थापितं ॥ सोहंतदात्मकोहं ॥ अप्रतिष्ठोपिसर्वव्यापकत्वायत्रकुत्रचिदस्थितोपि ॥ ४४ ॥ मत्साम्यंमत्सारूप्यंमदैक्यंमत्सायुज्यम् ॥ ४५ ॥ कुतोबेरस्यगौणत्वंतदाह ॥ लिंगाभावइति ॥ लिंगाभावेसर्व

अहमेवपरंब्रह्ममत्स्वरूपंकलाकलम् ॥ ब्रह्मत्वादीश्वरश्चाहंकृत्यंमेनुग्रहादिकं ॥ ३६ ॥ बृहत्वाद्बृंहणत्वाच्चब्रह्माहंब्रह्मकेशवौ ॥ समत्वाद्व्यापकत्वाच्चतथैवात्माहमर्भकौ ॥ ३७ ॥ अनात्मानःपरेसर्वेजीवाएवनसंशयः ॥ अनुग्रहाद्यंसर्गांतंजगत्कृत्यंचपंचकम् ॥ ३८ ॥ ईशत्वादेवमेनित्यंनमदन्यस्यकस्यचित् ॥ आदौब्रह्मत्वबुध्यर्थंनिष्कलंलिंगमुत्थितम् ॥ ३९ ॥ तस्मादज्ञातमीशत्वंव्यक्तंद्योतयितुंहिवां ॥ सकलोहमतोजातःसाक्षादीशस्तुतत्क्षणात् ॥ ४० ॥ सकलत्वमतोज्ञेयमीशत्वंमयिसत्वरम् ॥ यदिदंनिष्कलंस्तंभंममब्रह्मत्वबोधकम् ॥ ४१ ॥ लिंगलक्षणयुक्तत्वान्ममलिंगंभवेदिदम् ॥ तदिदंनित्यमभ्यर्च्यंयुवाभ्यामत्रपुत्रकौ ॥ ४२ ॥ मदात्मकमिदंनित्यंममसान्निध्यकारणम् ॥ महत्पूज्यमिदंनित्यमभेदाल्लिंगलिंगिनोः ॥ ४३ ॥ यत्रप्रतिष्ठितंयेनमदीयंलिंगमीदृशम् ॥ तत्रप्रतिष्ठितःसोहमप्रतिष्ठोपिवत्सकौ ॥ ४४ ॥ मत्साम्यमेकलिंगस्यस्थापनेफलमीरितम् ॥ द्वितीयेस्थापितेलिंगेमदैक्यंफलमेवहि ॥४५॥ लिंगंप्राधान्यतःस्थाप्यंतथाबेरंतुगौणकम् ॥ लिंगाभावेनतत्क्षेत्रंसबेरमपिसर्वतः ॥ ४६ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांसप्तमोऽध्यायः ॥७॥ ब्रह्मविष्णूऊचतुः ॥ सर्गादिपंचकृत्यस्यलक्षणंब्रूहिनौप्रभो ॥ शिवउवाच ॥ मत्कृत्यबोधनंगुह्यंकृपयाप्रब्रवीमिवाम् ॥ १ ॥ सृष्टिःस्थितिश्चसंहारस्तिरोभावोऽप्यनुग्रहः ॥ पंचैवमेजगत्कृत्यंनित्यसिद्धमजाच्युतौ ॥ २ ॥ सर्गःसंसारसंरंभस्तत्प्रतिष्ठास्थितिर्मता ॥ संहारोमर्दनंतस्यतिरोभावस्तदुत्क्रमः ॥ ३ ॥

तःसबेरमपितत्स्थानंक्षेत्रंनभवेदित्यर्थः ॥ ४६ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांलिंगपूजादिवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ओंनमःशिवाय ॥ शंकरःप्राहतौस्वीयंसृष्ट्याद्यंकृत्यपंचकम् ॥ प्रणवादिस्वरूपंचतदष्टमइहोच्यते ॥ १ ॥ १ ॥ २ ॥ सृष्ट्यादीनांलक्षणमाह ॥ सर्गइति ॥ संसारसंरंभःसंसारारंभःतत्प्रतिष्ठातद्वृद्धिः ॥ तस्यसंसारस्य ॥ तदुत्क्रमःजीवानांतस्मात्संसारादुद्धारः ॥ ३ ॥ ॥ ॥

तन्मोक्षःतस्मात्संसारात्मुक्तिः ॥ अन्यःभूम्यादिःतूर्ष्णींकेवलंगोपुरबिंबवत् यथागोपुरस्यपुरद्वारस्यजलादौप्रतिबिंबंलोकप्रवेशादिव्यापारयुक्तंभासतेतद्ब दित्यर्थः ॥ ॥ ४ ॥ संसारपरिजृंभणंकर्मवशेनप्राणिनांसंसारस्यहानोपादानव्यापाररूपंपंचममनुग्रहःमयिआकाशात्मनि ॥ ५ ॥ इदंसृष्ट्यादिकम् ॥ यथा दृश्यतेतत्कथनमुखेनसर्गादीनांस्थानान्याह ॥ सृष्टिरिति ॥ जगतइतिशेषः ॥ ६ ॥ तदेवव्यक्ततयादर्शयति ॥ सृज्यतइति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ रुद्र



तन्मोक्षोऽनुग्रहस्तन्मेकृत्यमेवंहिपंचकम् ॥ कृत्यमेतद्वहत्यन्यस्तूर्ष्णींगोपुरबिंबवत् ॥ ४ ॥ सर्गादियच्चतुःकृत्यंसंसारपरिजृंभणम् ॥ पंचमंमुक्तिहेतुर्वैनित्यंमयिचसुस्थिरम् ॥ ५ ॥ तदिदंपंचभूतेषुदृश्यतेमामकैर्जनैः ॥ सृष्टिर्भूमौस्थितिस्तोयेसंहारःपावकेतथा ॥ ६ ॥ तिरोभावोऽनिलेतद्वदनुग्रहइहांबरे ॥ सृज्यतेधरयासर्वमद्भिःसर्वंप्रवर्द्धते ॥७॥ अर्द्यतेतेजसासर्ववायुनाचापनीयते ॥ व्योम्नानुगृह्यतेसर्वंज्ञेयमेवंहिसूरिभिः ॥ ८ ॥ पंचकृत्यमिदंवोढुंममास्तिमुखपंचकम् ॥ चतुर्दिक्षुचतुर्वक्त्रंतन्मध्येपंचमंमुखम् ॥ ९ ॥ युवाभ्यांतपसालब्धमेतत्कृत्यद्वयंसुतौ ॥ सृष्टिस्थित्यभिधंभाग्यंमत्तःप्रीतादतिप्रियम् ॥ १० ॥ तथारुद्रमहेशाभ्यामन्यत्कृत्यद्वयंपरम् ॥ अनुग्रहाख्यंकेनापिलब्धुंनैवहिशक्यते ॥ ११ ॥ तत्सर्वंपौर्विकंकर्मयुवाभ्यांकालविस्मृतम् ॥ नतद्रुद्रमहेशाभ्यांविस्मृतंकर्मतादृशम् ॥ १२ ॥ रूपेवेशेचकृत्येचवाहनेचासनेतथा ॥ आयुधादौचमत्साम्यमस्माभिस्तत्कृतेकृतम् ॥ १३ ॥ मद्ध्यानविरहाद्वत्सौमौढ्यंवामेवमागतम् ॥ मज्ज्ञानेसतिनैवंस्यान्मानंरूपंमहेशवत् ॥ १४ ॥ तस्मान्मज्ज्ञानसिद्ध्यर्थंमंत्रमोंकारनामकम् ॥ इतःपरंप्रजपतंमामकंमानभंजनम् ॥ १५ ॥ उपादिशंनिजंमंत्रमोंकारमुरुमंगलम् ॥ ओंकारोमन्मुखाज्जज्ञेप्रथमंमत्प्रबोधकः ॥ १६ ॥ वाचकोऽयमहंवाच्योमंत्रोऽयंहिमदात्मकः ॥ तदनुस्मरणंनित्यंममानुस्मरणंभवेत् ॥ १७ ॥ अकारउत्तरात्पूर्वमुकारःपश्चिमाननात् ॥ मकारोदक्षिणमुखाद्बिंदुःप्राङ्मुखतस्तथा ॥ १८ ॥ ॥

महेशाभ्यांमद्विभूतिभ्यांकृत्यद्वयंसंहारतिरोभावरूपं ॥ ११ ॥ पौर्विकंपूर्वकालेसंपादितं ॥ १२ ॥ १३ ॥ तत्कृतेरुद्रमहेशकृते ॥ १४ ॥ मानभंजनंअभिमानस्यनाशकम् ॥ १५ ॥ उपादिशमिति ॥ अहमितिशेषः ॥ १६ ॥ मदात्मकइति ॥ वाच्यवाचकयोरभेदादितिभावः ॥ तदनुस्मरणंओंकारस्मरणम् ॥ १७ ॥ उत्तरान्मुखात्बिंदुरनुस्वारः ॥ १८ ॥ ॥ ॥ ॥ ॥

असौओंकारः ॥ विजृंभितःविस्तृतःएकीभूतःसंहिताक्षरः ॥१९॥ सर्वंजगत् ॥ वेदेति ॥ वेदाश्चस्त्रीपुंसभेदेनभौतिकशरीरवर्गद्वयंचेत्यर्थः ॥ तत्रहेतुमाह ॥ शिवेति ॥ प्रणवइतिशेषः ॥ २० ॥ अस्मात्प्रणवात् ॥ सकलस्यजगतः ॥ अकारादीति ॥ अकारान्नकारउकारान्मकारइत्यादिक्रमेणैवेत्यर्थः ॥२१॥ पंचअकारादिलकारांताः ॥ शिरश्चतुरिति ॥ शिरइत्यनेनोपरितनंमुखंलक्ष्यते ॥ गायत्रिःह्रस्वत्वमार्षं ॥२२॥ ततःगायत्र्याः ॥ इतःपंचाक्षरमंत्रात् ॥ २३ ॥

नादोमध्यमुखादेवंपंचधाऽसौविजृंभितः ॥ एकीभूतःपुनस्तद्वदोमित्येकाक्षरोभवत् ॥१९॥ नामरूपात्मकंसर्वंवेदभूतकुलद्वयम् ॥व्याप्तमेतेनमंत्रेणशिवशक्त्योश्चबोधकः ॥२०॥अस्मात्पंचाक्षरंजज्ञेबोधकंसकलस्यतत् ॥ अकारादिक्रमेणैवनकारादियथाक्रमम् ॥२१॥अस्मात्पंचाक्षराज्जातामातृकाःपंचभेदतः ॥तस्माच्छिरश्चतुर्वक्त्रात्रिपाद्गायत्रिरेवहि ॥२२॥ वेदःसर्वस्ततोजज्ञेततोवैमंत्रकोटयः ॥तत्तन्मंत्रेणतत्सिद्धिःसर्वसिद्धिरितोभवेत् ॥२३॥ अनेनमंत्रकंदेनभोगोमोक्षश्चसिद्ध्यति ॥ सकलामंत्रराजानःसाक्षाद्भोगप्रदाःशुभाः ॥२४॥ नंदिकेश्वरउवाच ॥ पुनस्तयोस्तत्रतिरःपटंगुरुःप्रकल्प्यमंत्रंचसमादिशत्परम् ॥ निधायतच्छीर्ष्णिकरांबुजंशनैरुदङ्मुखंसंस्थितयोःसहांबिकः ॥ २५ ॥ त्रिरुच्चार्याग्रहीन्मंत्रंयंत्रतंत्रोक्तिपूर्वकम् ॥ शिष्यौचतौदक्षिणायामात्मानंचसमर्प्पयत् ॥ २६ ॥ प्रबद्धहस्तौकिलतौतदंतिकेतमेवदेवंजगदतुर्जगद्गुरुम् ॥ २७ ॥ ब्रह्माच्युतावूचतुः ॥ नमोनिष्कलरूपायनमोनिष्कलतेजसे ॥ नमःसकलनाथायनमस्तेसकलात्मने ॥ २८ ॥ नमःप्रणववाच्यायनमःप्रणवलिंगिने ॥ नमःसृष्ट्यादिकर्त्रेचनमःपंचमुखायते ॥ ॥ २९ ॥ पंचब्रह्मस्वरूपायपंचकृत्यायतेनमः ॥ आत्मनेब्रह्मणेतुभ्यमनंतगुणशक्तये ॥ ३० ॥ सकलाकलरूपायशंभवेगुरवेनमः ॥ इतिस्तुत्वागुरुंपद्यैर्ब्रह्माविष्णुश्चनेमतुः ॥ ३१ ॥ ईश्वरउवाच ॥ वत्सकौसर्वतत्त्वंचकथितंदर्शितंचवाम् ॥ जपतंप्रणवंमंत्रंदेवीदिष्टंमदात्मकम् ॥ ३२ ॥ ज्ञानंचसुस्थिरंभाग्यंसर्वंभवतिशाश्वतं ॥ आर्द्रायांचचतुर्दश्यांतज्जाप्यंत्वक्षयंभवेत् ॥ ३३ ॥ सूर्यगत्यामहार्द्रायामेकंकोटिगुणंभवेत् ॥ मृगशीर्षांतिमोभागःपुनर्वस्वादिमस्तथा ॥ ॥ ३४ ॥ आर्द्रासमंसदाज्ञेयंपूजाहोमादितर्पणे ॥ दर्शनंतुप्रभातेचप्रातःसंगवकालयोः ॥ ३५ ॥

॥२४॥तयोःविष्णुब्रह्मणोः॥पटंवस्त्रम्॥प्रकल्प्यप्रसार्य॥गोपनार्थमितिभावः॥तच्छीर्ष्णितयोर्विष्णुब्रह्मणोर्मस्तके॥२५॥अग्रहीत्अग्राहयत् ॥ शिष्यौविष्णुब्रह्माणौ॥दक्षिणायांदक्षिणादानार्थं॥२६॥२७॥२८॥२९॥३०॥नेमतुःप्रणामंचक्रतुः॥३१॥३२॥३३॥सूर्येति॥सूर्याधिष्ठितायामार्द्रायामित्यर्थः॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ सद्द्रव्यैःपार्थिवादिभिः ॥ ३८ ॥ ३९ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांसाध्यसाधनखंडेपंचकृत्यादिवर्णननामाऽष्टमोध्यायः ॥ ८ ॥ ॥ ओंनमःशिवाय ॥ द्रव्याणिलिंगनिर्माणतत्प्रतिष्ठाविधिस्तथा ॥ मूर्तिपूजाप्रकारश्चनवमेत्रनिरूप्यते ॥ १ ॥ १ ॥ तटेनदीतीरे ॥ २ ॥ आरोप्यंस्थाप्यम् ॥ पुण्यतीर्थादौस्थापनेहेतुमाह ॥ यत्रेति ॥ पार्थिवेनपृथिवीसंबंधिद्रव्येण आप्येनजलमयेन ॥ तैजसेनधातुमयेन ॥



चतुर्दशीतथाग्राह्यानिशीथव्यापिनीभवेत् ॥ प्रदोषव्यापिनीचैवपरयुक्ताप्रशस्यते ॥ ३६ ॥ लिंगंबेरंचमेतुल्यंयजतांल्लिंगमुत्तमम् ॥ तस्माल्लिंगंपरंपूज्यंबेरादपिमुमुक्षुभिः ॥ ३७ ॥ लिंगमोंकारमंत्रेणबेरंपंचाक्षरेणतु ॥ स्वयमेवहि सद्द्रव्यैःप्रतिष्ठाप्यंपरैरपि ॥ ३८ ॥ पूजयेदुपचारैश्चमत्पदंसुलभंभवेत् ॥ इतिशास्यतथाशिष्यौतत्रैवांऽतार्हितःशिवः ॥ ३९ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायामष्टमोऽध्यायः ॥ ८ ॥ ॥ ऋषयऊचुः ॥ कथंलिंगंप्रतिष्ठाप्यं कथंवातस्यलक्षणम् ॥ कथंवातत्समभ्यर्च्यंदेशेकालेचकेनहि ॥ १ ॥ सूतउवाच ॥ युष्मदर्थंप्रवक्ष्यामिबुध्यतामवधानतः ॥ अनुकूलेशुभेकालेपुण्येतीर्थेतटेतथा ॥ २ ॥ यथेष्टंलिंगमारोप्यंयत्रस्यान्नित्यमर्चनम् ॥ पार्थिवेनतथाप्येनतैजसेनयथारुचि ॥ ३ ॥ कल्पलक्षणसंयुक्तंलिंगंपूजाफलंलभेत् ॥ सर्वलक्षणसंयुक्तंसद्यःपूजाफलप्रदम् ॥ ॥ ४ ॥ चरेविशिष्यतेसूक्ष्मंस्थावरेस्थूलमेवहि ॥ सलक्षणंसपीठंचस्थापयेच्छिवनिर्मितम् ॥ ५ ॥ मंडलंचतुरस्रंवा त्रिकोणमथवातथा ॥ खट्वांगवन्मध्यसूक्ष्मंलिंगपीठंमहाफलम् ॥ ६ ॥ प्रथमंमृच्छिलादिभ्योलिंगंलोहादिभिःकृतम् ॥ येनलिंगंतेनपीठंस्थावरेहिविशिष्यते ॥ ७ ॥ लिंगंपीठंचरेत्वेकंलिंगंबाणकृतंविना ॥ लिंगप्रमाणंकर्तृणांद्वादशांगुलमुत्तमम् ॥ ८ ॥ ॥ ॥ ॥ ॥

॥ ३ ॥ कल्पलक्षणसंयुक्तंशैवागमादिषुयेकल्पाःलिंगप्रकारविधयउक्तास्तल्लक्षणयुक्तंलिंगंकार्यमितिशेषः ॥ ४ ॥ चरेचलनयोग्येसूक्ष्मंस्वल्पं ॥ ५ ॥ खट्वांगवदिति ॥ दंडारोपितशिरःकपालात्मकोध्वजःखट्वांगमितिमिताक्षरायांविज्ञानेश्वरः ॥ ६ ॥ मृच्छिलादिभ्यःनिर्मातव्यमितिशेषः ॥ येनद्रव्येण ॥ ७ ॥ बाणलिंगेऽयंनियमोनास्तीत्याह ॥ लिंगमिति ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

एकांगुलन्यूनमेकादशांगुलं॥ ९॥ निर्माणप्रकारमाह॥ गर्भगृहे मध्यगृहे॥ १०॥ दिग्द्वारेइति॥ पूर्वस्यांपश्चिमायांचदिशिमुख्येतद्गृहद्वारेकार्यइत्यर्थः॥ नवरत्नान्याह ॥ नीलमिति ॥ ११ ॥ मध्येलिंगमिति ॥ लिंगस्यमध्येस्थापनप्रदेशेपूर्वोक्तरत्नरूपंमहद्द्रव्यंनिक्षिपेदित्यर्थः ॥ पारेमध्येषष्ट्यावेत्यव्ययीभावसमासः ॥ १२ ॥ सद्याद्यैःसद्योजातमित्यादिभिःपंचभिर्मंत्रैः ॥ पंचस्थानेपूर्वादिदिक्षुमध्येचेत्यर्थः॥ सकुलंसपरिवारं ॥ १३॥ जडंगृहारामवस्त्रादि ॥ अजडं

न्यूनंचेत्फलमल्पंस्यादधिकंनैवदुष्यते ॥ कर्तुरेकांगुलन्यूनंचरेपिचतथैवहि ॥ ९ ॥ आदौविमानंशिल्पेनकार्यंदेवगणैर्युतम् ॥ तत्रगर्भगृहेरम्येदृढेदर्पणसंनिभे ॥ १० ॥ भूषितेनवरत्नैश्चदिग्द्वारेचप्रधानके ॥ नीलंरक्तंचवैडूर्यंश्यामंमरकतंतथा ॥ ११ ॥ मुक्ताप्रवालगोमेदवज्राणिनवरत्नकम् ॥ मध्येलिंगंमहद्द्रव्यंनिक्षिपेत्सहवेदिके ॥ १२ ॥ संपूज्यलिंगंसद्याद्यैःपंचस्थानेयथाक्रमम् ॥ अग्नौचहुत्वाबहुधाहविषासकुलंचमाम् ॥ १३ ॥ अभ्यर्च्यगुरुमाचार्यमर्थैःकामैश्चबांधवं ॥ दद्यादैश्वर्यमर्थिभ्योजडमप्यजडंतथा ॥ १४ ॥ स्थावरंजंगमंजीवंसर्वंसंतोष्ययत्नतः ॥ सुवर्णपूरितेश्वभ्रेनवरत्नैश्चपूरिते ॥ १५ ॥ सद्यादिब्रह्मचोच्चार्यध्यात्वादेवंपरंशुभम् ॥ उदीर्यचमहामंत्रमोंकारंनादघोषितम् ॥ १६ ॥ लिंगंतत्रप्रतिष्ठाप्यलिंगंपीठेनयोजयेत् ॥ लिंगंसपीठंनिक्षिप्यनित्यलेपेनबंधयेत् ॥ १७ ॥ एवंबेरंचसंस्थाप्यंतत्रैवपरमंशुभम् ॥ पंचाक्षरेणबेरंतुउत्सवार्थंबहिस्तथा ॥ १८ ॥ बेरंगुरुभ्योगृण्हीयात्साधुभिःपूजितंतुवा ॥ एवंलिंगेचबेरेचपूजाशिवपदप्रदा ॥ १९ ॥ पुनश्चद्विविधंप्रोक्तंस्थावरंजंगमंतथा ॥ स्थावरंलिंगमित्याहुस्तरुगुल्मादिकंतथा ॥ २० जंगमंलिंगमित्याहुःक्रिमिकीटादिकंतथा ॥ स्थावरस्यचशुश्रूषाजंगमस्यचतर्पणम् ॥ २१ ॥ तत्तत्सुखानुरागेणशिवपूजांविदुर्बुधाः ॥ पीठमंबामयंसर्वंशिवलिंगंचचिन्मयम् ॥ २२ ॥ ॥

गवादि ॥ १४ ॥ श्वभ्रेगर्ते ॥ नवरत्नैःपूर्वोक्तैः ॥ १५ ॥ सद्यादिब्रह्मसद्योजातादिमंत्रपंचकं ॥ १६ ॥ तत्रगर्ते ॥ नित्यलेपेनदृढसंयोजकद्रव्येण ॥ बंधयेत्संयोजयेत् ॥ १७ ॥ एवंलिंगप्रतिष्ठाप्रकारेण ॥ तत्रैवगर्तएव ॥ १८ ॥ मूर्तिपूजायाःप्रकारांतरमाह ॥ बेरमिति ॥ १९ ॥ द्विविधमिति ॥ लिंगमितिशेषः ॥ २० ॥ शुश्रुषाजलादिसेचनेनवर्धनपोषणादिकम् ॥ तर्पणंजलान्नदानादिनासंतोषणम्॥ २१॥ अंबामयंप्रकृतिरूपम् ॥ चिन्मयंज्ञानरूपं ॥ २२ ॥

लिंगंकर्तृ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तदंगाचमनंपाद्यांगाचमनम् ॥ निवेदनंनैवेद्यम् ॥ २७ ॥ प्रकारांतरमाह ॥ अथवेति ॥ २८ ॥ २९ ॥ मानुषेमनुष्यस्थापिते ॥ एवमग्रेपि॥स्वयंभुविस्वयंप्रादुर्भूते ॥ अपूर्वकेअभिनवे ॥ ३० ॥ शिवेति ॥ उक्तलिंगमितिशेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥ अ

यथादेवीमुमामंकेधृत्वातिष्ठतिशंकरः ॥ तथालिंगमिदंपीठंधृत्वातिष्ठतिसंततम् ॥ २३ ॥ एवंस्थाप्यमहालिंगंपूजयेदुपचारकैः ॥ नित्यपूजायथाशक्तिध्वजादिकरणंतथा ॥ २४ ॥ इतिसंस्थापयेल्लिंगंसाक्षाच्छिवपदप्रदम् ॥ अथवा चरलिंगेतुषोडशैरुपचारकैः ॥२५॥ पूजयेच्चयथान्यायंक्रमाच्छिवपदप्रदम् ॥ आवाहनंचासनंचअर्घ्यंपाद्यंतथैवच ॥ २६ ॥ तदंगाचमनंचैवस्नानमभ्यंगपूर्वकं ॥ वस्त्रंगंधंतथापुष्पंधूपंदीपंनिवेदनम् ॥ २७ ॥ नीराजनंचतांबूलंनमस्कारोविसर्जनम् ॥ अथवाऽर्घ्यादिकंकृत्वानैवेद्यांतंयथाविधि ॥ २८ ॥ अथाभिषेकंनैवेद्यंनमस्कारंचतर्पणम् ॥ यथाशक्तिसदाकुर्यात्क्रमाच्छिवपदप्रदम् ॥ २९ ॥ अथवामानुषेलिंगेप्यार्षेदैवेस्वयंभुवि ॥ स्थापितेऽपूर्वकेलिंगेसोपचारंयथातथा ॥ ३० ॥ पूजोपकरणेदत्तेयत्किंचित्फलमश्नुते ॥ प्रदक्षिणानमस्कारैःक्रमाच्छिवपदप्रदम् ॥ ३१ ॥ लिंगदर्शनमात्रंवानियमेनशिवप्रदम् ॥ मृत्पिष्टगोशकृत्पुष्पैःकरवीरेणवाफलैः ॥ ३२ ॥ गुडेननवनीतेनभस्मनान्नैर्यथारुचि ॥ लिंगंयत्नेनकृत्वांऽतेयजेत्तदनुसारतः ॥ ३३ ॥ अंगुष्ठादावपितथापूजामिच्छंतिकेचन ॥ लिंगकर्मणि सर्वत्रनिषेधोस्तिनकर्हिचित् ॥ ३४ ॥ सर्वत्रफलदाताहिप्रयासानुगुणंशिवः ॥ अथवालिंगदानंवालिंगमौल्यमथापिवा ॥ ३५ ॥ श्रद्धयाशिवभक्तायदत्तंशिवपदप्रदम् ॥ अथवाप्रणवंनित्यंजपेद्दशसहस्रकम् ॥ ३६ ॥ संध्ययोश्च सहस्रंवाज्ञेयंशिवपदप्रदम् ॥ जपकालेमकारांतंमनःशुद्धिकरंभवेत् ॥ ३७ ॥ समाधौमानसंप्रोक्तमुपांशुसार्वकालिकम् ॥ समानप्रणवंचेदंबिंदुनादयुतंविदुः ॥ ३८ ॥ अथपंचाक्षरंनित्यंजपेदयुतमादरात् ॥ संध्ययोश्चसहस्रंवाज्ञेयंशिवपदप्रदम् ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥

त्यशक्तविषयेआह ॥ अंगुष्ठादाविति ॥ ३४ ॥ प्रयासानुगुणंश्रमानुरूपेण ॥ ३५ ॥ ३६ ॥ संध्ययोःप्रातःसायंच ॥ मकारांतंप्रणवाख्यंब्रह्म ॥ ३७ ॥ समानेति ॥ समानएकरूपएवप्रणवोयस्मिंस्तदिदंजपविधानं ॥ ३८ ॥ ३९ ॥ ॥ ॥ ॥ ॥

ब्राह्मणानामिति ॥ द्विजानामेवप्रणवाद्यःपंचाक्षरस्त्यर्थः ॥ ४० ॥ कुंभेति ॥ कुंभैःकलशैःस्नानंस्नानविधिःगुरोर्ग्राह्यमितिसंबंध्यते ॥ मातृकान्यासमका
रादिवर्णैर्न्यासं ॥ अत्रगुरुःकीदृशस्तमाह ॥ ब्राह्मणइति ॥ ४१ ॥ अन्येषांशूद्राणां ॥ ४२ ॥ ४३ ॥ ब्रह्मादीनांब्रह्मविष्णुरुद्रमहेशानां ॥ ब्रजेदिति ॥
क्रमेणेतिशेषः ॥ अक्षराणामिति ॥ मंत्राक्षराणांमध्येएकैकाक्षरस्यैकैकंलक्षंपृथक्पृथग्जपेदित्यर्थः ॥ ४४ ॥ अक्षरेति ॥ यावंतिमंत्राक्षराणितावल्लक्षमि

प्रणवेनादिसंयुक्तंब्राह्मणानांविशिष्यते ॥ दीक्षायुक्तंगुरोर्ग्राह्यंमंत्रंह्यथफलाप्तये ॥ ४० ॥ कुंभस्नानंमंत्रदीक्षामातृ
कान्यासमेवच ॥ ब्राह्मणःसत्यपूतात्मागुरुर्ज्ञानीविशिष्यते ॥ ४१ ॥ द्विजानांचनमःपूर्वमन्येषांचनमोंतकम् ॥ स्त्री
णांचक्वचिदिच्छंतिनमोंतंचयथाविधि ॥ ४२ ॥ विप्रस्त्रीणांनमःपूर्वमिदमिच्छंतिकेचन ॥ पंचकोटिजपंकृत्वासदाशि
वसमोभवेत् ॥ ४३ ॥ एकद्वित्रिचतुःकोट्याब्रह्मादीनांपदंब्रजेत् ॥ जपेदक्षरलक्षंवाअक्षराणांपृथक्पृथक् ॥ ४४ ॥
अथवाक्षरलक्षंवाज्ञेयंशिवपदप्रदं ॥ सहस्रंतुसहस्राणांसहस्रेणदिनेनहि ॥ ४५ ॥ जपेन्मंत्रादिष्टसिद्धिर्नित्यंब्राह्म
णभोजनात् ॥ अष्टोत्तरसहस्रंवैगायत्रींप्रातरेवहि ॥ ४६ ॥ ब्राह्मणस्तुजपेन्नित्यंक्रमाच्छिवपदप्रदाम् ॥ वेदमंत्रां
स्तुसूक्तानिजपेन्नियममास्थितः ॥ ४७ ॥ एकंदशार्णमंत्रंचशतोनंचतदूर्ध्वकम् ॥ अयुतंचसहस्रंचशतमेकंविनाभ
वेत् ॥ ४८ ॥ वेदपारायणंचैवज्ञेयंशिवपदप्रदम् ॥ अन्यान्बहुतरान्मंत्रान्जपेदक्षरलक्षतः ॥४९॥ एकाक्षरांस्तथा
मंत्रान्जपेदक्षरकोटितः ॥ ततःपरंजपेच्चैवसहस्रंभक्तिपूर्वकम् ॥ ५० ॥ एवंकुर्याद्यथाशक्तिक्रमाच्छिवपदंलभेत् ॥
नित्यंरुचिकरंत्वेकंमंत्रमामरणांतिकम् ॥ ५१ ॥ जपेत्सहस्रमोमितिसर्वाभीष्टंशिवाज्ञया ॥ पुष्पारामादिकंवापितथा
संमार्जनादिकम् ॥ ५२ ॥ शिवायशिवकार्यार्थेकृत्वाशिवपदंलभेत् ॥ शिवक्षेत्रेतथावासंनित्यंकुर्याच्चभक्तितः॥५३॥
जडानामजडानांचसर्वेषांभुक्तिमुक्तिदम् ॥ तस्माद्वासंशिवक्षेत्रेकुर्यादामरणंबुधः ॥ ५४ ॥ ॥ ॥

त्यर्थः ॥ सहस्राणांसहस्रंदशलक्षं ॥ ४५ ॥ इष्टसिद्धिरिति ॥ भवेदितिशेषः ॥ ४६ ॥ ४७ ॥ दशार्णमंत्रंदशाक्षरमंत्रं ॥ शतोनमिति ॥ तदूर्ध्वकंशताद
धिकंयत्सहस्रादितच्छतेनोनंकार्यमित्यर्थस्तदेवोदाहृत्यदर्शयति ॥ अयुतमिति ॥ ४८ ॥ ४९ ॥ परंप्रणवं ॥ ५० ॥ ५१ ॥ सहस्रमिति ॥ एकंमंत्रंओ
मित्याकारकंसहस्रंसहस्रवारमामरणांतिकंनित्यंजपेदित्यन्वयः॥ ५२ ॥ शिवायकल्याणाय ॥ शिवक्षेत्रेकाश्यादौ ॥ ५३ ॥ जडानामिति ॥ यतइत्यादिः
भुक्तिमुक्तिदमर्थाच्छिवक्षेत्रं ॥ ५४ ॥ ॥ ॥ ॥ ॥

लिंगादिति ॥ लिंगंपरितइत्यर्थः ॥ पुण्यंपुण्यजननस्थलं ॥ मानुषकेमनुष्यस्थापितलिंगके ॥ ५५ ॥ धनुश्चतुर्हस्तं ॥ स्वयंभुविस्वयंभुलिंगयुते ॥ ५६॥५७॥ ॥ ५८ ॥ शिवक्षेत्रेमृतस्यदाहादिकरणेफलमाह ॥ दाहमिति ॥ मास्यंमासिकश्राद्धम् ॥ पिंडामिति ॥ योलभेतेतिशेषः ॥ ५९ ॥ ६० ॥ क्रमात्सारूप्यादिक्रमादित्यर्थः ॥ स्ववर्णेति ॥ ब्राह्मणादिस्वस्ववर्णानुरूपंतत्फलातिशयंशोभनाचारादिनाप्राप्नुतइतिसंबंधः ॥ ६१ ॥ वर्णोद्धारेणनिकृष्टपूर्ववर्णनिवृत्तिपूर्वकोत्कृष्टवर्णलाभेनं ॥ ६२ ॥ प्रातरिति ॥ प्रातरादिकालात्मकंयदहर्वर्ततेतस्यप्रातरादिषुत्रिष्वपिकालेष्वेकतएकैकस्मिन्कालेशिवाराधनंकृतंचेदित्यर्थः ॥

लिंगाद्धस्तशतंपुण्यंक्षेत्रेमानुषकेविदुः ॥ सहस्रारत्निमात्रंतुपुण्यंक्षेत्रेतथार्षके ॥ ५५ ॥ दैवलिंगेतथाज्ञेयंसहस्रारत्निमानतः ॥ धनुःप्रमाणसाहस्रंपुण्यंक्षेत्रेस्वयंभुवि ॥ ५६ ॥ पुण्यक्षेत्रेस्थितावापीकूपाद्यंपुष्कराणिच ॥ शिवगंगेतिविज्ञेयंशिवस्यवचनंयथा ॥ ५७ ॥ तत्रस्नात्वातथादत्वाजपित्वाहिशिवंव्रजेत् ॥ शिवक्षेत्रंसमाश्रित्यवसेदामरणंतथा ॥ ५८ ॥ दाहंदशाहंमास्यंवासपिंडीकरणंतुवा ॥ आब्दिकंवाशिवक्षेत्रेक्षेत्रेपिंडमथापिवा ॥ ५९ ॥ सर्वपापविनिर्मुक्तःसद्यःशिवपदंलभेत् ॥ अथवासप्तरात्रंवावसेद्वापंचरात्रकम् ॥ ६० ॥ त्रिरात्रमेकरात्रंवाक्रमाच्छिवपदंलभेत् ॥ स्ववर्णानुगुणंलोकेस्वाचारात्प्राप्नुतेनरः ॥ ६१ ॥ वर्णोद्धारेणभक्त्याचतत्फलातिशयंनरः ॥ सर्वकृतंकामनयासद्यःफलमवाप्नुयात् ॥ ६२ ॥ सर्वकृतमकामेनसाक्षाच्छिवपदप्रदम् ॥ प्रातर्मध्यान्हसायान्हमहस्त्रिष्वेकतःक्रमात् ॥ ६३ ॥ प्रातर्विधिकरंज्ञेयंमध्यान्हंकामिकंतथा ॥ सायान्हंशांतिकंज्ञेयंरात्रावपितथैवहि ॥ ६४ ॥ कालोनिशीथोवैप्रोक्तोमध्ययामद्वयंनिशि ॥ शिवपूजाविशेषेणतत्कालेऽभीष्टसिद्धिदा ॥ ६५ ॥ एवंज्ञात्वानरःकुर्वन्यथोक्तफलभाग्भवेत् ॥ कलौयुगेविशेषेणफलसिद्धिस्तुकर्मणा ॥ ६६ ॥ उक्तेनकेनचिद्वापिअधिकारविभेदतः ॥ सद्वृत्तिःपापभीरुश्चेत्तत्तत्फलमवाप्नुयात् ॥ ६७ ॥ ऋषयऊचुः ॥ अथक्षेत्राणिपुण्यानिसमासात्कथयस्वनः ॥ सर्वाःस्त्रियश्चपुरुषायान्याश्रित्यपदंलभेत् ॥ ६८ ॥ सूतयोगिवरश्रेष्ठशिवक्षेत्रागमांस्तथा ॥ सूतउवाच ॥ शृणुतश्रद्धयासर्वक्षेत्राणिचतदागमान् ॥ ६९ ॥ इतिश्रीशिवमहापुराणेविद्येश्वरसंहितायांनवमोऽध्यायः ॥ ९ ॥ ॥

॥ ६३ ॥ उक्तकालभेदेनफलभेदमाह ॥ प्रातरिति ॥ विधिकरंनित्यविधिसंपादकंकामिकंकाम्यफलस्यसंपादकंशांतिकंवैराग्यस्यसंपादकं ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ उक्तेनकर्मणेतिसंवध्यते ॥ ६७ ॥ सर्वाइति ॥ सर्वस्त्रीपुरुषसंघइत्यर्थः ॥ लभेदिति ॥ आर्षमेकवचनं ॥ ६८ ॥ तदागमान्शिवमाहात्म्यस्यप्रतिपादकान्वेदभागान् ॥ ६९ ॥ इतिश्रीशैवमहापुराणेविद्येश्वरसंहिताटीकायांसारबोधिन्यांलिंगमूर्तिपूजाप्रशंसनंनामनवमोऽध्यायः ॥ ९ ॥

